॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१००

॥ श्रीः ॥

# लौकिकन्यायशास्त्रार्थकला

तथा

## कूटशास्त्रार्थकला



पण्डितराज-

शुक्लश्रीवेणीमाधवशास्त्री

THE

HARIDAS SANSKRIT SERIES

100

THE

# LAUKIKA NYĀYA S'ĀSTRĀRTHA KALĀ

&

# KŪTAS'ĀSTRĀRTHA KALĀ

By

Panditraj S'rī Veṇimādhava S'āstrī

EDITED WITH PRADIPA NOTES

by

Tārkika S'rī Rājnārāyana S'āsrī

---

* श्रीः *

# लौकिकन्यायशास्त्रार्थकला

तथा

# कूटशास्त्रार्थकला

भारतप्रसिद्धशास्त्रार्थि-घटिकाशतकशतावधानसंस्कृताशुकविचक्रवर्ति-

पण्डितराज-शुक्ल श्रीवेणीमाधवशास्त्रिणा रचिता

तदात्मजेन

श्रीराजनारायणशास्त्रिणा तार्किकेण

उपयुक्तप्रदीपसम्पादिता ।

PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

**Benares City.**

1939.

PRINTED BY
JAYA KRISHNA DAS GUPTA,
VIDYA VILAS PRESS, BENARES CITY.

1939.

# विनिवेदनम् ।

अयि भोस्संस्कृतसाहित्योद्धारसँल्लग्नमानसा विश्वविदितवैदुष्यसम्पिपादयिषया विगतालसा अध्यापकजना अजस्रमध्ययनान्तरायागच्छदापत्तिततीर्शिरसा माऽप्यनिपीोढ्यन्तो बान्धवा अध्ययनेरताश्च ? नेदन्तावद् दृष्टिपथात्तिरोहितन्तत्रभवताम्भवतां यद् संस्कृतसाहित्ये लौकिकन्यायानां कीदृशस्समुपयोगः । व्याकरणे दर्शने धर्मशास्त्रादिव्यवस्थापने च प्रायशोऽजानन्तोऽपि तत्तदर्थान्प्रयुञ्जत एव लौकिकाः । जिज्ञासवोऽपि कष्टात् कष्टमनुभवन्तोऽपि पठनपाठनप्रणाल्यभावात् शासुञ्च प्रभवन्ति । अस्युना एव च ग्रन्था ये एतान्त्रुटिन्दूरीकृत्योपकुर्वताम् । इत्येवम् बहुधा जनानामनुरोधेन ग्रन्थलेखनादिबहुकार्यासक्तचेतसोऽपि मदीयास्तातचरणाः (जौनपुर-बदलापुर-उदयपुरगेलहवाभिजन-पण्डितराजशुक्लश्रीवेणीमाधवशास्त्रिणः) व्यवहारौपयिकीम्प्रायो द्विशतीं लौकिकन्यायानां संगृह्य व्याख्यातवन्तः। तेषामाज्ञानुरोधेन मयाऽपि तत्तद्ग्रन्थद्वारा तेषां प्रदीपटिप्पणीषु समर्थनम्प्रामाणिकत्वञ्च व्यस्पष्टि । आशासे भवतामेवमुपकृत्लौकिकन्यायशास्त्रार्थकला प्रभवेदिति । अपरमपीदं श्रीमताम्प्रमोदातिप्रमोदावहं यद् सहैवानया कूटसाहित्यतत्त्वमूवा संस्कृतकूटकूटात्मिका बोद्धृवक्तृश्रोत्रादिसकलजनानन्ददायिनी विलसति कूटशास्त्रार्थकला नाम । यत्र च विशेषतो रहस्यानाम् विस्फोटाः, बहिरालापप्रकाराः, अन्तरालापप्रभृतयो गूढविशायकविषयाः, केशववासुदेवदशरथादिशब्दानाम् विचित्रास्सार्थदृष्टान्तसमन्वया व्युत्पत्तयः, इत्येवम्विधा अनेके संस्कृतस्नेहिसहजानन्दकारका विषया विनिवेशिताः ।

आरब्धेऽल्पयत्नेन मया सन्नाविताः पदार्थाशुद्धीः संशोधनाशुद्धीर्मुद्रणादिदोषजन्याशुद्धिततीश्च क्षाम्यं क्षाममनुग्रहीष्यन्ति भवन्त इति ।

श्रीकृष्णजन्माष्टमी १९९६ वै०
प्रभुदत्तविद्यालयः
रानी भवानी गली
काशी

भवदीयस्य—
श्रीराजनारायणशुक्लस्य
[ नव्यन्यायाचार्यस्य ]

# समर्पणम्

श्रीमतान्तत्रभवताम्भवताम्परमार्हणीयचरणानाम् कर्मकाण्डज्ञानकाण्डोपासनाकाण्डत्रयीजगच्चक्रचूडामणीनाम् पण्डितमण्डलीमान्यानां वेदाचार्यवेदमार्तण्डाद्यनेकोपाधिजुषां याज्ञिकमूर्धन्यानाम् काशिकहिन्दूविश्वविद्यालये धर्मविज्ञानविभागे, काशीस्थगोयनकासंस्कृतमहाविद्यालयेऽखिलवेदकर्मकाण्डधर्मशास्त्रविभागे चाध्यक्षपदमलङ्कुर्वताम् परमगुरूणाम् पण्डितप्रवरश्रीविद्याधरशास्त्रिणाम् परमसेवासु सादरं समर्पणम् ।

श्रौतैः स्मार्त्तैर्बहुविधमखैः प्रीणिता येन देवाः,<br>
शास्त्रैस्सर्वैरुपचिततनुर्वेदवाचां गृहं यः ।<br>
कीर्त्तिर्यस्योल्लसति भुवने वादिवृन्दैः सुगीता,<br>
सोऽयं शश्वज्जयतु सुगुरुःश्रीलविद्याधरोऽर्च्यः ॥ १ ॥

मान्याः !

स्वीयतातचरणैर्विनिर्मितामेनां शास्त्रार्थकलाभिधानां स्वरचितप्रदीपविभूषितां यथामति सम्पाद्य तुच्छामप्यतुच्छामभिमन्यमानः श्रीमत्सेवासु समुपहरन् परन्तोषमाप्नोमि प्रसादपुरस्सराम्भवच्छुभाशिषञ्च कामये ।

श्रीमच्चरणसरोजचञ्चच्चञ्चरीकः—

**श्रीराजनारायणशुक्लः**

[ न्यायाचार्यः ]

श्रीहनुमते नमः ।

# लौकिकन्यायशास्त्रार्थकला

ध्यात्वामरवचो दिव्यं सर्वसर्वार्थसाधनम् ।<br>
लौकिकन्यायशास्त्रार्थकलान्तन्वे सताम्मुदे ॥ १ ॥<br>
यद्यप्यनेकशो ग्रन्था लौकिकन्यायदर्शकाः ।<br>
संक्षेपतोऽर्थगतये तथापीयं विरच्यते ॥ २ ॥<br>
काशीप्रयागायोध्यारव्यत्रिकोणपरिमध्यगे ।<br>
जमदग्निपुरा ( जौनपुर ) ख्याते मण्डलेऽभिजनो मतः ॥ ३ ॥<br>
बदलापुरोदयपुरगेलहवाग्रामसंज्ञकः ।<br>
सरयूपारीणशुक्लो गर्गवंशसमुद्भवः ॥ ४ ॥<br>
शब्दतर्काद्यलङ्कारः श्रीवेणीमाधवाभिधः ।<br>
काश्यां वसंश्च शास्त्रेषु नाना टीकां करोम्यहम् ॥ ५ ॥<br>
व्युत्पत्तिवादशास्त्रार्थकलादीनां समादरः ।<br>
यथा कृतस्तथैवेयं सर्वथाऽऽद्रियतां बुधैः ॥ ६ ॥<br>
यद्यप्यपूर्वं नो सर्वमीक्षितव्यमिहेरितम् ।<br>
तथापि दर्शन्दर्शं सन्तोषमेष्यन्ति सज्जनाः ॥ ७ ॥

## १ अर्कमधुन्यायः ।

अर्कदुग्धेन रोगशान्तौ किमन्यद्वन्वेषणेन । निष्कर्षः, अल्पीयसा प्रयत्नेन कार्यसिद्धावलम्बहुायासेन ।

---

प्रदीपः

प्रणम्य परमात्मानम्पितरौ च पुनः पुनः ।<br>
श्रीगुरुं शिवदत्ताख्यं तर्कवागीशमद्वयम् ॥ १ ॥<br>
लौकिकन्यायशास्त्रार्थकलायाष्टिप्पणायितम् ।<br>
प्रदीपमारभे श्रीमद्राजनारायणोऽमतिः ॥ २ ॥

( १ ) अत एव वेदान्तसूत्रभाष्ये केवलाच्चेद् ज्ञानात् पुरुषार्थसिद्धिःस्यात् किम-

### २ उदकनिमज्जनन्यायः।

अयम्मनुष्यो दोषी न वेति विचारे जले निमग्नो भव यावत् प्रक्षिप्तो बाणो न प्रत्यागतो भवेत्। यदि मध्ये निमग्नकं जलनिमज्जनाद्बहिर्दृष्टं न स्यात्तदायन्न दोषीति निष्कर्षः। सत्यासत्यनिर्णयेऽयन्न्यायः।

### ३ अशोकवनिकान्यायः।

रावणस्सीतां हृत्वा राक्षसीभ्य आज्ञप्तवान् अशोकवनिकायामियं स्थाप्या। अशोकवनिकाश्च अनेकाः। यत्र कुत्राप्यशोकवनिकायां स्थापने रावणाज्ञा पालितेति फलितार्थः।

### ४ मात्स्यन्यायः।

प्रबलमत्स्यास्तुच्छमत्स्यान् खादन्ति। विरोधे हि बलीयसा दुर्बलो बाध्यत इति न्यायाऽपरपर्य्यायः।

---

र्थमनेकायाससमन्वितानि कर्माणि ते कुर्युः। "अर्के चेन्मधु विन्देत किमर्थम्पर्वतं व्रजेदितिन्यायात्"।

तद् यथा पथि जातेऽर्के मधुत्सृज्य तेनैव यथा मध्वर्थिनः पर्वतं न गच्छेयुस्तादृशं हि तत्। अपि चाहुः—अर्के चेन्मधु विन्देत किमर्थम्पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥

अथ च—यद्यल्पान्महतश्च कर्मणः समं फलं जायेत ततोऽर्के चेन्मधु विन्देतेत्यनेनैव न्यायेनाल्पेन सिद्धे महति न कश्चित् प्रवर्त्तेत।

अर्के "गृहकोणे"इत्यपि क्वाचित्कः पाठः।

(४) प्रबलनिर्बलविरोधे सबलेन निर्बलबाधविवक्षायाम् मात्स्यन्यायावतारः। अयम् प्राय इतिहासपुराणादिषु दृश्यते। तथा हि—वसिष्ठे प्रह्लादाख्याने तत्समाधिं प्रस्तुत्योक्तम्—

एतावताथ कालेन तद्रसातलमण्डलम्।
बभूवाराजकन्तीक्ष्णं मात्स्यन्यायकदर्थितम्॥

यथा प्रबला मत्स्या निर्बलांस्तान्नाशयन्ति तथाऽराजकेऽमुकदेशे प्रबला जनाः निर्बलान्नरान्नाशयन्तीति न्यायफलितोऽर्थः।

अ तएव कामन्दकीये नीतिसारे—परस्पराभिषतया जगतो भिन्नवर्त्मनः।
दण्डाभावे परिध्वंसी मात्स्यो न्यायः प्रवर्त्तते॥इति।

अथ च कथासरित्सागरे—नास्त्येवाराजकं किञ्चिद् वत कोऽपि प्रजास्वहो।
राजशब्दः सुरैः सृष्टो मात्स्यन्यायभयादयम्॥ इति।



### ५ अश्मलोष्टन्यायः।

पदार्थयोर्विषमतासिद्ध्येऽयं न्यायः। पाषाणेष्टिकन्यायाऽपरपर्य्यायोऽयन्न्यायः।

### ६ अस्नेहदीपन्यायः।

तैलेन विना न यथा दीपस्थितिरेवम्विधे व्यवहारेऽस्य न्यायस्य प्रयोगः।

### ७ विषकीटन्यायः।

विषाज्जातः कीटो विषं भक्षन् सन् विषस्थ एव जीवति। अत एव "विषकृमिन्यायेन जीवाम्यहम्" इति ग्रन्थः।

### ८ अहिनकुलन्यायः।

स्वाभाविकविरोधस्थलेऽस्य प्रयोगः। यथा अहिनकुलयोस्स्वाभाविकविरोधः।

### ९ काकतालीयन्यायः।

तालवृक्षच्छाये पथिको विश्रान्तः तालवृक्षशिरसि काकस्तिष्ठति उड्डीयमाने

---

(५) अत एव बृहदारण्यकोपनिषदि "यथाऽश्मानमृत्वा लोष्टो विध्वंसेत"इति। अथ च ब्रह्मसूत्रशाङ्करभाष्ये यथा लोकेऽश्मानम्पाषाणमृत्वा गत्वा प्राप्य लोष्टः पांसुपिण्डः पाषाणचूर्णनायाश्मनि निक्षिप्तः स्वयं विध्वंसेत विशंसेत विचूर्णीभवेत्।

अथ च "अश्मलोष्टनिदर्शनं" इति शाङ्करभाष्ये।

(६) अत एव रघुनाथेन।

"अस्मिश्चाध्यासेऽज्ञानं कारणम्। तत्त्वज्ञानेन वातदीपन्यायेन तन्निवृत्तावस्नेहदीपन्यायेन तदध्यासोऽपि निवर्त्तते। न च ज्ञानेनैवोभयनिवृत्तिः कुतो न स्यात्। ज्ञानमज्ञानस्यैव निवर्त्तकमितिन्यायविरोधात। द्विविधा हि निवृत्तिर्विरोधिना सामग्रीनिवृत्त्या च। यथा वातादिना दीपनाशो यथा च तैलवर्त्यादिनिवृत्त्या दीपनिवृत्तिः। तत्राद्या निवृत्तिरज्ञानस्य, द्वितीया कार्यवर्गस्येति बोध्यम्" इति।

अत एव च योगवासिष्ठे—तत्र वर्षसहस्राणि निर्विकल्पसमाधिना।
दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत्॥ इति।

(७) पूर्णश्लोकस्त्वयम्-चाणक्योक्तः।

विप्रास्मिन्नगरे महान् कथय कस्तालद्रुमाणां गणः,
को दाता रजको ददाति वसनं प्रातर्गृहीत्वा निशि।
को दक्षः परदारवित्तहरणे सर्वोऽपि दक्षो जनः,
कस्माज्जीवसि हे सखे विषकृमिन्यायेन जीवाम्यहम्॥ १॥

(९) परेतु काशिकावृत्तौ—

काकतालीयम् अजाकृपाणीयम् अन्धकवर्त्तकीयम्, अतर्कितोपनतं चित्रीकरणमु-

### १५ अरण्यरोदनन्यायः ।

अरण्यरोदनन्न कश्चित् शृणोति न समवेदनयति । यत्र कथने कृते न कश्चित् ध्यायति तत्रास्य प्रयोगः ।

### १६ काकदध्युपघातकन्यायः ।

काकेभ्यो दधि रक्ष्यतामित्युक्तेऽपि काकबिडालादिसर्वेभ्योऽपि रक्ष्यतामिति गम्यते । अभिप्रायानुसारेण वाक्यप्रयोगः ।

### १७ लोहचुम्बकन्यायः ।

गतिहीनलौहः क्रियाहीनश्च । परन्तु चुम्बकाऽऽकर्षणेन तत्पार्श्वङ्गच्छति । तद्वत् निष्क्रियोऽपि पुरुषः प्रकृतिसाहचर्यात् सक्रियो भवति ।

### १८ अन्धपङ्गुन्यायः ।

प्रकृतिरन्धतमा पुरुषः पङ्गुः, पुरुषः प्रकृतिस्कन्धमारुह्य मार्गम्प्रदर्शयन्नुपकरोति । परोपकारविषयकोऽयन्न्यायः ।

---

(१५) एवमेव काव्यालङ्कारे शवोद्वर्तनन्याय, श्वपुच्छोन्नामनन्याय, बधिरकर्णजपन्याय, अन्धदर्पणन्याय, कृतान्धमुखमण्डनादिन्यायास्तुल्या एव ।

अत एव—किरणावल्यां कुसुमाञ्जलौ च—

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितम् ,
स्थले कमलरोपणं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतः,
कृतान्धमुखमण्डना यदबुधो जनः सेवितः ॥ इति पठन्ति ।

(१६) अत एव वाक्यपदीयानुसारी भर्तृहरिः—

काकेभ्यो रक्ष्यतां सर्पिरिति बालोऽपि चोदितः ।
उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति ॥ इति ।

एवमेव-ईश्वरगीतायाम्—तन्त्रवार्त्तिके

ये त्विमं विष्णुमव्यक्तं मां च देवम्महेश्वरम् । एकीभावेन पश्यन्ति न तेषाम्पुनरुद्भवः॥ इति

अत्र हरिहरयोर्ग्रहणं काकदध्युपघातकन्यायेन विदेवग्रुपलक्षणमिति विवेकः सङ्गच्छते।

(१७) अत एव साङ्ख्याचार्याः-पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।

पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्गः॥ इति

अत्रपङ्ग्वन्धवदिति दृष्टान्तार्थम् । यथा गतिशक्तिविकलस्य पङ्गोर्गतिसाधनाय गतिमतोऽन्धस्यापेक्षा, दृष्टिशक्तिरहितस्य चान्धस्य गतिशक्तिमत्त्वेऽपि स्वाभीष्टदेशगमनं दर्शकमन्तरेण न सम्भवति तथा च यथा स्वकार्याय तयोः परस्परापेक्षा तथा



### १९ निम्नगाप्रवाहन्यायः ।

नदीप्रवाहस्वभावः । प्रवाहो रुद्धो न भवति यथा तथा सुकृतिनाम्भाग्यमन्यथा न भवति ।

### २० फलवत्सहकारन्यायः ।

पथिक आम्रच्छायामधिगच्छति श्रान्तो भवति आम्रफलमपि भक्षति । एकस्मिन् कार्ये क्रियमाणे फलद्वयं यत्र तत्रास्य न्यायस्य प्रयोगः ।

### २१ वरगोष्ठीन्यायः ।

वरपक्षकन्यापक्षस्था जना एकीभूयानन्दमनुभवन्ति । विवाहरूपमेकमेव कार्यं साधयन्ति । पक्षद्वयाभीष्टं सिद्ध्यति । सम्मेलनेन यत्र कार्यकरणेच्छा तत्रास्य न्यायस्य प्रयोगः ।

### २२ सर्वापेक्षान्यायः ।

यत्र बहवो मनुष्या निमन्त्रितास्तत्र यद्येकः कश्चन पूर्वमेव निमन्त्रणस्थानम्प्राप्तोऽन्यानपेक्षते तद्वत् एककार्यसिद्धयेऽनेकापेक्षा यत्र तत्रास्य न्यायस्य प्रयोगः ।

### २२ सूचीकटाहन्यायः ।

कश्चिल्लौहकारगृहं गत्वा कटाहो निर्मेय इत्युवाच । पश्चादन्यो गत्वा सूची निर्मेयेत्युवाच । कार्यद्वयोपस्थितौ लौहकारो विचारयति पूर्वं लाघवात्सूच्येव निर्मा-

---

क्रियारहितस्य पुरुषस्य सक्रियप्रधानस्यापेक्षा दृष्टिशक्तिरहितस्य च प्रधानस्य दृष्टिशक्तियुक्तपुरुषस्यापेक्षेत्यत उभाभ्यामन्योऽन्यमपेक्ष्य स्वस्वकार्यं निष्पाद्यते इत्यर्थः ।

(२०) अत एव रघुनाथः—एकफलाकाङ्क्षायां तदाराधनमन्यदपि फलं प्रयच्छतीति विवक्षायान्तु फलवत्सहकारन्यायः । यथा सहकार "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमिधानादतिसौरभ आम्रवृक्षोऽतिमधुरपक्वफलनमितशाखः सन्नुपसन्नाय छायार्थिने मनाय फलं परिपक्वं चाप्रार्थितमपि ददाति तथा प्रकृतेऽपीत्यर्थः" इति व्याख्यानं कुरुते ।

अथ च योगवासिष्ठे—"नित्याभ्यासविवेकाभ्यां चित्तमाशु प्रसीदति । आम्र एव ददातीति साहकारीं शनैः शनैः" आशुग्रहणम्प्रसादावश्यम्भावद्योतनार्थम् । सहकारः पुष्पफलाद्यतिसौरभस्तत्रावलक्ष्मणां दशाम्" इति ।

(२३) अत एव सप्तपदार्थ्याम् अनुभवविभागे-अनुभवो द्विविधः प्रमाऽप्रमा च । अप्रमापि संशयो विपर्ययश्च । प्रमा प्रत्यक्षमनुमितिश्च ।

टीकाकारास्तु—अत्र प्रमानिरूप्यत्वात् परस्तादू विभक्तामप्यप्रमां सूचीकटाहन्यायेन प्राग्विभजते ऽप्रमापीति" व्याचक्षते ।

तव्या ततऽकटाह इति । यत्र लघुबृहत्कार्यद्वयोपस्थितिस्तत्र पूर्वं लघुकार्यकरणं ज्याय इति निश्चयार्थमस्य न्यायस्य प्रयोगः ।

### २४ सुन्दोपसुन्दन्यायः ।

सुन्दोपसुन्दनामकौ दैत्यौ तपश्चर्यां कृतवन्तौ, लब्धवरावजेयौ सर्वैरप्यनारणीयौ । एकां मोहिनीन्दृष्ट्वा मोहितौ मोहिन्युवाच युवयोर्युद्धे यस्य विजयस्तेन साकं मम भार्यात्वन्नान्यथा । तौ युद्धयेतेस्म परस्परं । द्वौ स्वयम्मृतौ नेश्वरकर्तृको वधः । तथाच यत्रैवं प्रकारस्तत्रास्य प्रयोगः ।

### २५ सोपानारोहणन्यायः ।

प्रासादारोहणं सोपानारोहणक्रमेण भवति तथा बृहत्कार्यसिद्धये क्रमेण व्यापारः ।

### २६ सोपानावरोहणन्यायः ।

यथा क्रमेण सोपानारोहणन्तथा विपरीतक्रमेण अवरोहणं प्रत्यावर्त्तनमित्यर्थः ।

### २७ स्थविरलगुडन्यायः ।

वृद्धहस्तक्षिप्तो लगुडोऽभीष्टस्थानं न गच्छति। एवमादिस्थलेऽस्य न्यायस्य प्रयोगः

### २८ स्वामिभृत्यन्यायः ।

अन्यकार्यसिद्ध्यनन्तरं स्वकार्यसिद्धिर्यत्र तत्रास्य न्यायस्य प्रयोगः । फलितार्थश्च स्वामिकार्यं कृत्वा भृत्यऽप्रसन्नतया कृतकृत्यो भवति इति ।

---

( २४ ) अत एव लौकिकन्यायसंग्रहे—भारते सुन्दोपसुन्दसंज्ञौ सहोदरौ द्वावसुरौ तिलोत्तमार्थं वध्यघातकभावेनोभावपि परस्परं युध्यमानौ नष्टाविति श्रूयते । एवञ्च यत्र अन्योन्यनाश्यनाशकभावविवक्षा तत्रैवास्य प्रवृत्तिरिति फलति । तथाच वीचीतरङ्गन्यायेनोत्पन्नानां कार्यशब्दनाश्यानामन्त्योपान्त्यशब्दो परस्परेण नाश्यावन्त्य उपान्त्येनोपान्त्यश्चान्त्येनेति केचित्तर्कविदः ।

अत एव साङ्ख्यतत्त्वकौमुद्याम्—"ननु परस्परं विरोधशीला गुणाः सुन्दोपसुन्दवत् परस्परं ध्वंसन्ते इत्येव युक्तं प्राक् एव तेषामेकक्रिया कर्तृतायाः" इतिग्रन्थोऽपि प्रमाणयति ।

( २९ ) एवञ्चानात्मविदः आत्मानं विविदिषोर्नारदस्य प्रश्ने परमात्मानमेवास्मै व्याख्यास्यामीत्यभिसन्धिमान् सनत्कुमारः सोपानारोहणन्यायेन स्थूलादारभ्य तत्तद्भूमव्युत्पादनक्रमेण भूमानमतिदुर्ज्ञानतया परमसूक्ष्मं व्युत्पादयामासेति भामत्याम् पाठो दृश्यते ।

( २८ ) अत एव ब्रह्मसूत्रशाङ्करभाष्ये "नहि साम्ये सत्युपकार्योपकारकभावो भवति । नहि प्रदीपौ परस्परस्योपकुरुतः । ननु चेतनमपि कार्यकारणं स्वामिभृत्यन्या-



### २९ स्थूलाऽरुन्धतीन्यायः ।

अरुन्धती तारा सूक्ष्मा पृथिवीतो दूरस्थात्वेन सूक्ष्मतरा च । तद्दर्शनार्थं स्थूलसमर्पितारावलोकनेन दृष्टिम्बन्धयित्वा सूक्ष्मारुन्धतीदर्शनम् । यत्र सूक्ष्मातिसूक्ष्मतत्त्वदर्शनार्थं स्थूलपदार्थदर्शनन्तत्रास्य प्रयोगः ।

### ३० वृक्षप्रकम्पनन्यायः ।

कश्चन वृक्षारूढमनुष्यं प्रति अधस्स्थो जनः उवाच—सा शाखा कम्पनीया । अन्य उवाच सा शाखा कम्पनीया । एवं प्रेरणायाम्बुद्धिमान् कश्चन वृक्षमूलं कम्पयामास । तदा सर्वाश्शाखाऽकम्पिता आसन् ।

### ३१ समुद्रवृष्टिन्यायः ।

### ३२ भुक्तभोजनन्यायः ।

समुद्रे वृष्टिर्यथा निरर्थिका । भुक्ते भोजनं यथा निरर्थकम् । एवम्विधे व्यवहारेऽस्य न्यायस्य द्वितीयस्य च प्रयोगः ।

### ३३ श्यालकसुनकन्यायः ।

कस्य चित् शुनो नाम तच्छ्यालकस्य शुनोऽवाच्यभाषणे तत्पत्नी रुष्टा भवति । भ्रातृनामोच्चारणेनावाच्यभाषणात् । अन्यार्थतात्पर्येणान्यार्थलाभेऽस्य न्यायस्य प्रयोगः ।

### ३४ सन्दंशपतितन्यायः ।

सन्दंशः लोके सड़सी इति नाम प्रसिद्धम् । मध्यस्थितपदार्थधारणम् यथा तथा पूर्वोत्तरपदार्थयोर्मध्यवर्तिपदार्थग्रहणं यत्र तत्रास्य न्यायस्य प्रयोगः ।

---

येन भोक्तुरुपकरिष्यति इति चेन्न ? स्वामिभृत्ययोरप्यचेतनांशस्यैव चेतनम्प्रत्युपकारकत्वात्" इति सङ्गच्छते ।

अन्यत्र च—"ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत् सम्बन्ध आहोस्विदग्निविस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति" इति कथनमपि चरितार्थम् ।

( ३० ) अत एव रघुनाथेन भाष्ये च यत्रैकस्य वस्तुनो मतभेदेन बहूनि रूपाणि तत्तच्छास्त्रेषु प्रतिपाद्यमानान्युपलभ्य क्रिया हि विकल्प्यते नतु वस्तु इति न्यायाद् वस्तुनि विकल्पासम्भवम्मत्वा विरुद्धानां समुच्चयस्याप्यसम्भवेन तेष्वेकमतप्रतिपादितं सर्वाविरुद्धं वस्तु स्वीक्रियते तत्र वृक्षप्रकम्पनन्यायः प्रवर्त्तते इति फलति ।

### ३५ सिंहावलोकनन्यायः ।

सिंहो वध्यं हत्वा अग्रेगमनं कुर्वन् पृष्ठस्थं पश्यन् धावति । यत्र यत्र पूर्वपदार्थावलोकनं तत्र तत्रास्य न्यायस्य प्रयोगः ।

### ३६ विषवृक्षन्यायः ।

विषवृक्षं सम्पाल्य तस्य स्वयं छेदनमयोग्यम् । यत्रैवं व्यवहारस्तत्रास्य न्यायस्य प्रयोगः ।

### ३७ रात्रिदिवसन्यायः ।

रात्रिदिनयोरन्तरम् पणल्पिकयोरन्तरम् । पृथिव्याकाशयोरन्तरम् । एवम्व्यवहारेऽस्य न्यायस्य प्रयोगः ।

### ३८ विल्वखल्वाटन्यायः ।

सूर्यधर्मेणातप्तश्श्रान्त्यर्थं विल्ववृक्षच्छायमधिरूढवान् । तस्मिन्समये विल्वफलपतनम् । यत्रेष्टेऽनिष्टलाभस्तत्रास्य न्यायस्य प्रयोगः ।

---

( ३५ ) अत एव नीलकान्तेन वनपर्वटीकायाम्—गुरुभिर्नियमैर्जातो भरतो नाम पावकः, इति पद्यांशव्याख्याने सिंहावलोकन्यायेन शंयोःशैत्रमूर्जपुत्रं भरतं स्तौति शब्देन गुरुभिरिति ।

अत एव च हेमचन्द्रेण परिशिष्टपर्वणि—

सिंहावलोकनन्यायेनालीढःक्षत्रतेजसा ।
प्रत्यक्षानिव सोऽद्राक्षीत्तानमात्यान् सुतद्विपः ॥ इति सङ्गच्छते ।

(३६) अतएव सिद्धान्तकौमुद्याम् 'विषवृक्षोऽपि सम्वर्ध्य स्वयंच्छेत्तुमसाम्प्रतम्' इति ।

अयच खण्डनखण्डखाद्ये—"एते सर्वेतर्काः अस्माभिरेव तर्कपदव्यामभिषिक्तास्ततो न प्रबन्धेन निरस्यन्ते 'विषवृक्षोऽपि सम्वर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इति ।

अत एव-उपमितिग्रन्थे—

हाहा मयेदं नो चारु कृतं यत्सुतभर्त्सनम् ।
विषवृक्षोऽपि सम्वर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥ इति च ग्रन्थस्सङ्गच्छेते ।

( ३८ ) अत एव वर्द्धमानेन—"यथा खल्वाटः पर्यटन्नतर्कितं श्रीफलतरोरधस्तादागतो दैववशाच्च बिल्वमुपरि पतितं तद्वदन्योऽप्युभयवस्तुसंयोग एवमुच्यते" इति सङ्गच्छते ।

अत एव च भर्तृहरिणा—खल्वाटो दिवसेश्वरस्य किरणैस्सन्तापितो मस्तके,
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलंगतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः,
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ इति ।

अयञ्च न्यायः काकतालीयाजाकृपाणीयाभ्यान्तुल्य एवेति ध्येयम् ।



### ३९ देहलीदीपकन्यायः ।

देहल्यां मन्दिरादौ स्थापितो दीपो बहिरन्तश्च प्रकाशयति ।

### ४० करिबृंहितन्यायः ।

विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम् । बृंहितं करिगर्जितमिति कोशात् विशिष्टवाचकस्य बृंहितपदस्य "तत्र सद्विरदबृंहितशङ्की" इत्यादौ विशेषणवाचिद्विरदपदसमवधानाद् गर्जितमात्रविशेष्यपरत्वम् ।

किञ्च "सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्" इत्यत्र "कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इति कोशेन कीचकपदस्य वेणुमात्रपरत्वम् ।

किञ्च "उद्दामदानद्विपबृंहितैश्शतैर्नितान्तमुत्तुङ्गतुरङ्गहेषितैः । चलध्वजस्यन्दननेमिनिस्वनैरभूज्जिरुच्छ्वासमथाकुलंनभः" सूर्यसिद्धान्ते स्पष्टाधिकारे "दक्षिणोत्तरतोऽप्येवं यातो राहुस्स्वरंहसा । विक्षिपत्येष विक्षेपं चन्द्रादीनामपक्रमात्" विक्षेपं विक्षेपणम्, स्वरंहसा आत्मवेगेन विक्षिपति । विशिष्टवाचकत्वेऽपि विशेष्यपरत्वम् । वैयाकरणसिद्धान्तकौमुदीयस्मिरच्यत इत्यत्रोपसर्गाणां वाचकत्वपक्षे विशेष्यमात्रपरत्वम् ।

---

( ३९ ) अत एव जैमिनिना शावर भाष्ये यथा प्रासादे कृतः प्रदीपः सन्निधानाद्राजमार्गेऽप्युपकरोतीतिव्याख्यानं संगच्छते ।

अथ च सप्तपदार्थ्याम् द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि । प्रागभाववत्कार्यम् भोगायतनमन्त्यावयवि शरीरम् इत्यत्र "यद्यप्युद्देशानन्तरं लक्षणस्य वक्तव्यत्वाच्छरीरलक्षणानन्तरं भोगादिवदन्त्यावयवी लक्षयितुमुचितस्तथाप्यत्र द्रव्यपदव्यवच्छेद्यत्वेन प्राप्तत्वाद् देहलीदीपन्यायेनात्रापि तदर्थतयाऽत्रैव लक्षित इत्यदोषः इति ग्रन्थश्च संगच्छते ।

आनन्दगिरौ शङ्करविजये च एवमेव काकाक्षिगोलकन्यायोऽप्यनुसन्धेयः 'जामात्रर्थं श्रपितस्य सूपस्यातिथ्युपकारकत्ववत्' इति ।

( ४० )अत एव काव्यप्रकाशे—"सौन्दर्यसम्पत्तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान् पुष्पमालेव काञ्चाकर्षति सा सखे ॥

काव्यप्रदीपे च मालाशब्दो यद्यपि पुष्पस्यैव स्रजि शक्तस्तथापि पुष्पपदन्तपुष्टार्थम् लक्षणयोत्कृष्टत्वप्रतिपादकत्वात् । अयमेव करिबृंहितन्यायः ।

एवमेवापरत्र उदाहरणचन्द्रिकायाम्—अत्र निरुपपदान् मालाशब्दादेव पुष्पस्रक्प्रतीतेः पुष्पपदमुत्कृष्टपुष्पत्वे संक्रमितं वाच्यम् । तथच करिबृंहितादिष्वपि बोध्यमिति भणितम् ।

### ४१ करकङ्कणन्यायः ।

कङ्कणं करभूषणमिति कोशः । कङ्कणशब्द‿करभूषणवाचकोऽपि करशब्दप्रयोग‿करसम्बन्धिद्योतनार्थः ।

### ४२ ब्राह्मणवसिष्ठन्यायः ।

ब्राह्मणमानय वसिष्ठमप्यानयेत्युक्ते वसिष्ठोऽपि ब्राह्मण एव ।

### ४३ गोबलीवर्दन्यायः ।

गामानय बलीवर्दञ्चानयेत्युक्ते बलीवर्दोऽपि गोपदवाच्यः ।

### ४४ तक्रकौण्डिन्यन्यायः ।

सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतान्तक्रं कौण्डिन्यायेति व्याप्यव्यापकभावो बोध्यः ।

---

( ४२ ) अत एव पदमञ्जर्याम् "वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनार्थम् पृथग् ग्रहणं यथा ब्राह्मणा आगता वसिष्ठोऽप्यागत इति" व्याख्यानमपि महतीं सङ्गच्छतेतराम् ।

अत एव "इलन्त्य" सूत्रभाष्ये ब्राह्मणपरिव्राजकन्यायोऽप्येतेन तुल्यः ।

( ४३ ) वाचस्पतिना बलीवर्दस्य गोविशेषत्वेऽपि बलीवर्दस्य करिति गोत्वेन बोधनार्थं यथा प्रयोगस्तथाऽन्ययोः सामान्यविशेषरूपयोर्भेदेति बोधनार्थं यत्र प्रयोगस्तत्रास्य प्रवृत्तिः ।

अन्येन च—यत्र गाः कालय बलीवर्दांश्चेत्युच्यते तत्र गोपदेनैव बलीवर्दबोधसिद्धौ बलीवर्दपदं दुर्दम्यज्ञापनपरत्वेन सफलमिति कल्प्यते इति केचित् ।

अत एव च कुल्लूकभट्टाः "अत्र चानेकशब्दोपादाने गोबलीवर्दन्यायेन पौनरुक्त्यपरिहारः" इति ग्रन्थोऽपि सङ्गच्छते ।

न्यायवार्त्तिकतात्पर्यटीकायाम्—ब्राह्मणवसिष्ठन्यायब्राह्मणपरिव्राजकन्यायावव्ये- वद्धस्तिपदे निमग्नौ ।

( ४४ ) अत एव बृहदारण्यवार्त्तिके—तक्रकौण्डिन्यवन्न्यायो नचेहाप्यवसीयते ।
उत्सर्गापवादत्वाच्छून्यतैवात आगतेत् ॥ इति ।

अथच आनन्दगिरयः "अभिन्नशब्दस्य भेदनिषेधत्वेऽपि न भेदस्य शून्यता सर्वत्र प्राप्तस्य कारणे निषेधाद्ब्राह्मणेभ्यो दधि दीयतामित्यादौ प्राप्तस्य दधनस्तक्रं कौण्डिन्यायेति कौण्डिन्ये निषेधेऽप्यशून्यतावदित्याशंक्याह तक्रेति" साधु सङ्गच्छते ।

अत एव च महाभाष्ये "लौकिकोऽयं दृष्टान्तः । लोके हि सत्यपि सम्भवे बाधनम्भवति । तद्यथा—दधि ब्राह्मणेभ्यो दीयतान्तक्रं कौण्डिन्यायेति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति" इति ।



### ४५ माठरपरिवेषणन्यायः ।

सर्वे ब्राह्मणा भोज्यन्ताम्माठरकौण्डिन्यौ परिवेविषाताम्, निमित्तकार्यिणोर्बाधः ।

### ४६ तुष्यतुदुर्जनन्यायः ।

एवं स्वीकारेणैव यदि दुर्जनस्तुष्येत् तर्हि तुष्यतु का नो हानि‿प्रकारान्तरेण किञ्चिदुच्यते ।

### ४७—सम्भवव्यभिचाराभ्यांस्याद्विशेषणमर्थवदितिन्यायः ।

नीलो घट इत्यत्र नीले घटे घटस्य नीलता सम्भवति । पीतादिघटे सा व्यभिचरति । अतो घटस्य नील इति विशेषणमर्थवदिति तात्पर्यम् ।

### ४८—नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीतिन्यायः ।

नहि दण्डज्ञानम्विना दण्डीति ज्ञानम्भवति ।

### ४९ खले कपोतन्यायः ।

वृद्धा युवानश्शिशव‿कपोता‿खले यथाऽमी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः‿परस्परेणान्वयिनो भवन्ति ॥
एतेन घटमानयेत्युक्ते प्रथमक्षणे घटपदस्मरणम् , द्वितीयक्षणे आनयनादिस्म-

---

( ४६ ) यत्र प्रतिवाद्युक्तं रक्षन्दुष्टमपि वादिना प्रौढिवादेनाङ्गीकृत्यापि दूषणान्तरस्य दानं तत्रास्य प्रवृत्तिः ।

अत एव अद्वैतसिद्धौ—"यथास्वरूपं किमधिकरणमुतान्येषम् । यद् वा प्रतीतिकालः किं वा प्रतीतिरेव । उतावच्छेदकभेदो वेत्यत्र विनिगमनाविरहात्तुष्यतु दुर्जनन्यायेन स्वीकारेऽपि न निर्वाहः" इति सङ्गच्छते ।

अत एव च भामतीकाराः—"यद्येष परस्याग्रहो धर्मिण्यगृह्यमाणे तद्धर्मा न शक्या ग्रहीतुमिति । एवं नामास्तु तथा तुष्यतु परस्तथाप्यदोष इत्यर्थः" इति सङ्गच्छते ।

( ४८ ) अत एव "नागृहीतविशेषणेतिन्यायेन" इति कुमारिलभट्टाः ।

"अगृहीतविशेषणा विशिष्टबुद्धिर्नदृष्टा" इति न्यायमालाविस्तरे ।

"नागृहीतविशेषणा विशिष्टबुद्धिः" इति सप्तपदार्थ्याम् ।

"नागृहीतविशेषणा विशिष्टबुद्धिः" इति तार्किकरक्षायाम् ।

"नाज्ञातविशेषणा विशिष्टबुद्धिर्विशेष्यंसंक्रामति" इति रघुनाथः ।

"नह्यप्रतीते विशेषणे विशिष्टं किञ्चन प्रत्येतुमर्हन्ति" इति शाबरे भाष्ये ।

( ४९ ) अत एव साहित्यदर्पणे—समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके ।
खलेकपोतिकान्यायात्तत्करः स्यात् परोऽपिचेत् ॥
इत्युक्तं साधुसङ्गच्छतेतराम् ।

रणम्, तृतीयक्षणे प्रथमस्मरणस्य नाशाच्छाब्दबोधो न स्यादित्यपास्तम् । अनेन न्यायेन युगपत्तेषां स्मरणस्य निर्विवादत्वात् ।

५० प्रदीपन्यायः ।

विरुद्धपदार्थसम्बन्धेन यत्रैककार्यसिद्धिस्तत्रायन्न्याय प्रवर्त्तते । वर्त्तितैलाग्नयः परस्परम्विरोधिनोऽपि एकीभूय प्रकाशरूपमेकं कार्यं साधयन्ति । सत्त्वरजस्तमांसि विरुद्धान्यपि देहं प्रवृत्त्यादिकञ्च कार्यञ्जनयन्ति ।

५१ दण्डापूपन्यायः ।

एकत्र दण्डाऽपूपौ स्थापितौ दण्डो मूषकैर्भक्षितः, दुष्करदण्डभक्षणेनापूपोऽपि भक्षित इति गम्यते । श्लोकः-मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥ इति वाक्ये स्थावरग्रहणेन निबन्धद्विपदयोर्दण्डापूपन्यायाद्दानादिनिषेधसिद्धिरिति फलति । कठिनभक्षणेन सरलभक्षणं छन्यते इति निष्कर्षः ।

५२ कूर्माङ्गन्यायः ।

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । कूर्मदेहे तदिच्छया तदङ्गानि निस्सरन्ति तत्रैव लीयन्ते च ।

---

( ६१ ) अस्यैव अर्थापत्तिनाम्नाऽपि व्यवहारो लौकिकः । अत एव साहित्यकौमुद्याम् "दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते" मूषकेण दण्डो भक्षितश्चेदिहस्थः पूपोऽपि तेन भक्षित इति न्यायो दण्डापूपिका । तयान्यार्थागमोऽर्थान्तरप्रत्ययोऽर्थापत्तिरित्यर्थ इति व्याख्यानेन विरोधः ।

परं तु कुवलयानन्दे "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते । स जितस्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहाम् ॥" अत्र स इत्यनेन पद्मानि येन जितानीति विवक्षितं तश्च सोऽपि येन जितस्तेन पद्मानि जितानीति किमु वक्तव्यमिति दण्डापूपिकान्यायेन पद्मजयरूपार्थस्य संसिद्धिः काव्यार्थापत्तिः । तान्त्रिकाभिमतार्थापत्तिव्यावृत्तये काव्येति विशेषणमित्यभिदधति ।

( ६२ ) अत एव साङ्ख्याचार्याः सर्वदर्शनसंग्रहे च "यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति चाविर्भवन्त्येवं कारणस्य तन्त्वादेः पटादयो विशेषा निस्सरन्त आविर्भवन्त उत्पद्यन्ते इत्युच्यन्ते निविशमानास्तिरोभवन्तो विनश्यन्तीत्युच्यन्ते । न पुनरसतामुत्पत्तिः सतां वा विनाशः इति प्रवदन्ति ।



५३ भामतीन्यायः ।

भामती स्त्री रूपयौवनादिसम्पन्ना यथा एकेनैव नाम्ना पतिं सुखाकरोति दुःखाकरोति च सपत्नीः नरान्तरम् मोहयति चेति भावः ।

५४ सूत्रशाटकन्यायः ।

यत्र भाविसंज्ञया निर्देशस्तत्रायन्न्यायः । तन्तुवायम्प्रति कश्चिदाह अस्य सूत्रस्य शाटकम्वयेति । सिद्धिमन्तरा न शाटकत्वम्, अस्यैतादृशम्वस्तु वय यस्य शाटकमिति संज्ञा भाविनी ।

५५ कुलालदोहिनीन्यायः ।

यथा कुलालस्य गृहे हि दोहिनी सा वै कथं दोहिनिकेति संज्ञा ।
एवमिहापि भाविनी संज्ञा ।

५६ जलानयनन्यायः ।

जलमानयेत्युक्ते पात्रानयनं सुतरां सिद्ध्यति अनीप्सितमपि । एवम्व्यवहारेऽस्य प्रयोगः ।

५७-नहि करकङ्कणदर्शनाय आदर्शापेक्षा भवतीति न्यायः ।

प्रत्यक्षसामग्रीसत्त्वे तत्रैव पदार्थप्रतीतिः नानुमित्यादिसामग्र्यपेक्षेतिव्यवहारेऽस्य प्रवृत्तिः, नहि करिणि दृष्टे चीत्कारेणानुमातारस्तमनुमिमते ।

५८-भक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायः ।

अनिष्टे कर्मणि कृतेऽपि यत्र नाभीष्टसिद्धिरेवम्विधे व्यवहारेऽस्य प्रयोगः ।

---

( ६४ ) अत एव रघुनाथः-"यत्रतु भाविसंज्ञया निर्देशो यथा नारद्रोवसेत् काश्यामित्यत्र तत्र सूत्रशाटिकान्यायावतारः । सूत्रस्य शाटिकां वापयतीत्यत्र यथा सूत्रावस्थायां भाविन्या शाटिकेति संज्ञया निर्देशस्तथा दार्ष्टान्तिकेऽपीति बोद्धव्यम्" इति ।

अत एव च महाभाष्ये "आत्मनेपदेषु चापि नेतरेतराश्रयं भवति, कथम्, विज्ञास्यते भाविनी संज्ञा सूत्रशाटकवत् । तद् यथा कश्चित् कश्चित्तन्तुवायमाह अस्य सूत्रस्य शाटकं वयेति । स पश्यति यदि शाटको न वातव्योऽथ वातव्यो न शाटकः शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी खल्वस्य संज्ञाऽभिप्रेता स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद् भवतीति"

अत एव च तन्त्रवार्त्तिके "यथैवास्य सूत्रस्य शाटकं वयेत्युक्ते वानेन शाटकः क्रियते इति हि भाविसंज्ञाविज्ञानादविरोधो विज्ञायते तथैवात्र प्रत्येतव्यमिति" ।

( ६८ ) अतएव वेदान्तकल्पतरुपरिमलव्याख्याने—

ननु भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन प्रपञ्चस्याधिष्ठानव्य-

### ५९ आभणकन्यायः ।

आभणकं लोकप्रसिद्धकथनम् । यथा वराटकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति ।

### ६० रज्जुसर्पन्यायः ।

यथा रज्जोरज्ञानेन सर्पात्मना भानम् । ज्ञातायास्तु रज्जुत्वेन । ज्ञातस्य ब्रह्मणो निष्प्रपञ्चत्वेन भानम् । अज्ञातस्य सप्रपञ्चत्वेनेति दृष्टान्तः ।

### ६१ गुडजिह्विकान्यायः ।

जिह्वायां गुडलेपनं कृत्वा निम्बादि कटुद्रव्यं पाययन्ति पित्रादयः ।

### ६२ उष्ट्रकण्टकभक्षणन्यायः ।

उष्ट्रस्य शमीकण्टकभक्षणजातदुःखकालेऽपि शमीपत्रभक्षणजनुखलेशो भवति । व्यापारसमये यद्यपि दुःखन्तथापि फलसमये सुखम् एवं व्यवहारेऽस्य प्रयोगः ।

### ६३ रासभरुतन्यायः ।

गर्दभशब्द आदौ उच्चस्वरेण लभ्यः पश्चात् मन्दो भवति क्रमेण परिक्षीणः । तथा नीचप्रीतिः पूर्वमधिका पश्चान्मन्दा मन्दतरा च ।

---

तिरिक्ततया प्रतीयमानत्वात् कथमद्वैतसिद्धिरित्याशङ्कां तृणीकुर्वन्नाह अखण्डमिति" ग्रन्थस्सुसंगच्छते ।

( ६१ ) अतएव वाचस्पतिमिश्राः—"यथा तिक्तताभिया निम्बपानमकुर्वाणस्य बालस्य जिह्वायां गुडालेपंकृत्वा पित्रादिस्तं पाययति निम्बन्तथा अर्थवादवाक्यानि बह्वायाससाध्ये कर्मण्यप्रवर्त्तमानं पुरुषं स्वर्गाक्षय्यादिकं श्रावयित्वा प्रवर्त्तयन्ति । फलश्रुतिरपि रोचनार्था" इति ।

( ६२ ) अत एव शाङ्करे भाष्ये "शब्दाद्यविशेषेऽपि च भावनाविशेषात् सुखादिविशेषोपलब्धेः" इत्येतद्व्याख्याने भावना तत्तज्जातियोग्या वासना तद्विशेषादुष्ट्रादीनां कण्टकादौ सुखादिदर्शनात् इत्युक्तम् ।

तथैव हि वाचस्पतिना भामत्याम् "यदि पुनरेत एव सुखदुःखस्वभावा भवेयुस्ततः स्वरूपत्वाद् हेमन्तेऽपि चन्दनः सुखस्स्यात्, नहि चन्दनः कदाचिदचन्दनः । तथा निदाघेपि कुंकुमपंकस्सुखो भवेत् । नहि असौ कदाचित्कुङ्कुमपङ्कः । एवं कण्टकः क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखस्स्यात् नह्यसौ कांश्चित्प्रत्येवाकण्टक इति । तस्मादसुखादिस्वभावा अपि चन्दनकुंकुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादि हेतवो नतु स्वयं सुखादिस्वभावा इति रमणीयम्" इत्यपि ग्रन्थः सङ्गच्छते ।



### ६४ कुक्कुटध्वानन्यायः ।

कुक्कुटध्वनिर्ह्रस्वदीर्घप्लुतक्रमेण भवति तथा साधुमैत्री उत्तरोत्तरम्वर्द्धते ।

### ६५ इक्षुदण्डन्यायः ।

यथेक्षोःपर्वणि पर्वणि रसोत्कर्षस्तथा सज्जनमैत्र्यपि क्रमेण उद्रक्र्कतां प्राप्नोति।

### ६६ चालनीन्यायः ।

चालनी सारंपरित्यज्यासारमात्रंगृह्णाति । चाल्यते धान्याद्यनया चालनी, चालयतेणिजन्तात् ल्युट् ङीप् ।

### ६७ मक्षिकान्यायः ।

मक्षिका हि सर्वं देहम्परित्यज्य व्रणस्थानमेवालम्बते तथा दुष्टोऽपि ।

### ६८ जलौकान्यायः ।

जलौका हि स्त्रीस्तनाग्रे लग्ना दुग्धं त्यक्त्वा रुधिरं पिबति तथा दुष्टोऽपि ।

### ६९ भ्रमरन्यायः ।

भ्रमरो निर्गन्धं पुष्पं त्यक्त्वा सगन्धमाधत्ते, एवंव्यवहारेऽस्य प्रवृत्तिः ।

### ७० शूर्पन्यायः ।

शूर्पो तुसादि हेयन्त्यक्त्वा शुद्धमन्नमवशेषयति, तथा शिष्यो गुरूणां गुणान् आधत्ते न तु दोषान् ।

### ७१ व्याघ्रीक्षीरन्यायः ।

सिंहीक्षीरं सुवर्णपात्र एव तिष्ठति फलाय च भवति तथा गुरूपदेशो हि शमादिसाधनयुक्ते शिष्ये एव प्रतिष्ठां लभते नान्यत्र ।

### ७२ चित्राङ्गनान्यायः ।

यथा चित्ररूपाऽङ्गना स्त्री दृश्यमानापि चुम्बनाऽलिङ्गनादिफलं जनयितुन्न शक्नोति ।

---

( ६७ ) प्रश्नोपनिषदि तु—"तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुवन्ति" इत्युक्तम् ।

अपरे तु सर्वदर्शनसंग्रहकाराः—"यदा चित्तं निरुध्यते तदा चक्षुरादीनां निरोधेः प्रयत्नान्तरं नापेक्षणीयम् । यथा मधुकरराजं मधुमक्षिका अनुवर्त्तन्ते तथेन्द्रियाणि चित्तमिति" ।

### ७३ ऊषरवृष्टिन्यायः ।

यथोषरे वृष्टिर्निरर्थिका तथा मूर्खेभ्यः शिक्षाप्रदानन्निष्फलमिति भावः ।

### ७४ समुद्रवृष्टिन्यायः ।

समुद्रे किं जलवृष्टया ? तथा विद्वद्भ्यः कथमुपदेशः ।

### ७५ समुद्रजलशोषणन्यायः ।

यथा असम्भवाद् समुद्रशोषणे कस्यापि न प्रवृत्तिस्तथा कृत्यसाध्ये न प्रवर्त्तितव्यमिति भावः ।

### ७६ सुमेरुशिखरानयनन्यायः ।

अयमपि समुद्रजलशोषणन्यायतुल्य एव । यत्रासम्भवे कार्ये कश्चित् प्रवर्त्तते तत्रास्य प्रवृत्तिः ।

### ७७ काकदन्तगवेषणन्यायः ।

काकस्य दन्तास्सन्ति न वेति तेषां शौक्ल्यन्नवेति ।

### ७८ हस्तामलकन्यायः ।

हस्ते स्थितमामलकफलमसन्दिग्धं दृश्यते ।

---

(७३) अत एव परिशिष्टपर्वणि—कषायपक्षिवृक्षेषु कृतघ्नेषु दुरात्मसु ।
एतेषु निष्फलं दानमूषरेष्वम्बुवृष्टिवत् ॥ इति ।

अथ च अनुशासनपर्वणि—यथोषरे वीजमुप्तन्नरोहेन्नवा वप्ता प्राप्नुयाद् वीजभागम् । एवं श्राद्धं भुक्तमनर्हमाणैर्नचेहनामुत्र फलं ददाति इति निगद्यते ।

(७७) अत एव काठोपनिषदि शङ्करः "न चिकेतो मरणं मानुप्राक्षीः" नचिकेतो मरणम्मरणसम्बद्धम्प्रश्नं प्रेत्यास्ति नास्तीति काकदन्तपरीक्षारूपं मानुप्राक्षीर्नैवम्प्रष्टुमर्हसि" इत्युक्तवान् ।

अत एव च ध्वन्यालोके "व्यङ्ग्योऽर्थो भवतु मा वाभूद् कस्तत्राभिनिवेशः । काकदन्तपरीक्षाप्रायमेव तत्स्यादिति भावः" इत्युक्तम् ।

न्यायमञ्जरीकारा अमुमेव न्यायं वायसदशनविमर्शन्यायनाम्ना अभिदधति ।

(७७) अत एव न्यायमालाविस्तरे "क्रत्वर्थोऽयम्पुरुषार्थोऽयमिति विवेकस्य प्रयोजनं किमपि न पश्यामः । तस्मात् काकदन्तविचारवदयं विचार उपेक्षणीय इति चेन्नैवम्" इत्याद्युक्तम् ।

खण्डनखण्डखाद्ये च "न च वाच्यं सामान्यतोऽद्वैतप्रमाणसिद्धौ भूतायामपि विशेषतः प्रमाणप्रश्नो, यतः सामान्यसिद्धावेवाद्वैतसिद्धौ विशेषविचारः काकदन्तविचारवत्स्यात्" इतिप्रोक्तम् ।



### ७९ चित्रपटन्यायः ।

यथा धौतो घट्टितो हि लाञ्छितो रञ्जितः पटः चिदन्तर्यामिसूत्रात्मा विराडात्मा तथेर्य्यते ।

स्वतः शुभ्रोऽत्र धौतस्स्याद् घट्टितोऽन्यविलेपनात् ।
मष्याकारैर्लाञ्छितस्स्याद्रञ्जितो वर्णपूरणात् ॥

### ८०-चम्पापुटकवासनान्यायः पुटकचम्पावासनान्यायो वा ।

प्रथमे चम्पया सहितःपुटक इति समासः । चम्पा पुष्पविशेषः तद्वासना पुटके । यत्र वा वासनासंक्रमस्तत्रायन्न्यायः ।

### ८१-रूढिर्योगमपहरतीतिन्यायः ।

रथन्तरशब्दःसामवेदे रूढः रथेन तरतीति विग्रहमात्रम् ।

### ८२-जलकतकरेणुन्यायः ।

कतको जलशोधनद्रव्यविशेषः । अत एवायं हेमचन्द्रेण—
परिशिष्टपर्वणि—गुरुवाक्कतकक्षोदसंसक्तमभवत्सदा ।
प्रशान्तदुर्ध्यातमलं तन्मनोवारिनिर्मलम् ॥ इत्युक्तम् ।

---

(८१) अत एव विवरणप्रमेयसंग्रहे "ननु जिज्ञासाशब्दो विचारे रूढः । भाष्यकारादिभिस्तत्र विचारविवक्षया प्रयुक्तत्वात् । अतो रूढिर्योगमपहरतीति न्यायेनावयवार्थस्वीकारो न युक्तस्ततोऽथशब्दोऽप्यधिकारार्थो भविष्यति । इति विचारस्य प्रारब्धुं शक्यत्वादिति चेन्नैवम् ? रूढिर्योगमपहरतीति न्यायस्यात्राप्रसरात् । तत्र यः शब्द एकत्रार्थे रूढोऽपरत्र यौगिको यथाच्छागे रूढोऽजशब्द आत्मनि यौगिकस्तत्राजं पश्येत्युक्ते रूढिर्योगमपहरतीतिन्यायः प्रसरति । इह तु जिज्ञासाशब्दो न विचारे रूढः" इति सङ्गच्छते ।

अथ च तर्कभाषान्यायप्रदीपटीकायाम्—
लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी ।
कल्पनीया तु लभते नात्मानं योगबाधतः" ॥
इति सङ्गच्छतेतराम् ।

(८२) अत एव मनोः—फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ।
ननामग्रहणादेव तस्य वारि प्रसीदति ॥ इति श्रूयते ।

अथ च लौकिकन्यायसंग्रहे "यथा हि सपङ्कजले निक्षिप्ताः कतकस्यौषधिविशेषस्य रेणवो रजांसि तस्माज्जलात् पङ्कं विलाप्य स्वयमेव विलीयन्ते तथा तत्त्वज्ञानं सविलासाज्ञानं निवर्त्य स्वयमेव निवर्त्तन्ते" इति ।

### ८३ सर्वंवाक्यं सावधारणमिति न्यायः ।

अवधारणार्थक एवकारस्त्रिविधः क्रियान्वितः विशेषणान्वितः विशेष्यान्वितश्च । नीलमुत्पलम्भवत्येव, शङ्खः श्वेतः, पार्थएव धनुर्द्धर इत्युदाहरणानि ।

### ८४ सर्वंविशेषणं सावधारणमिति न्यायः ।

शङ्खः श्वेतइत्यत्र श्वेत एवेत्यर्थः ।

### ८५-मण्डूकतोलनन्यायः ।

मण्डूकतोलने तुलानिष्ठमण्डूकास्तु ज्ञात उत्प्लुत्योत्प्लुत्य पतन्तीतिभावः ।

### ८६-घुणाक्षरन्यायः ।

घुणः कीटविशेषः तद्भक्षितकाष्ठादावकस्मात् ककाराद्यक्षराकारलिपिद्वयति ।

---

उक्तञ्च भगवत्पादैः--अज्ञानकलुषं जीवं ज्ञानाभ्यासाद् विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ इति ।
अपरञ्च सुरेश्वरेण वार्त्तिके--अपां कतकसम्पर्काद् यथात्यन्तप्रसन्नता ।
अपास्ताशेषसंसारभावनस्यैवमात्मनः ॥
( ८२ ) स्वास्थ्यप्रसन्नतैतस्मिन् सुषुप्ते भवतीत्यतः ।
सम्प्रसादमिमम्प्राहुः सुषुप्तं तद्विरोजनाः ॥
अथ च हेमचन्द्रेण परिशिष्ट पर्वणि--गुरुवाक्कतकक्षोदसंसक्तमभवत् सदा ।
प्रशान्तदुर्ध्यानमलं तन्मनोवारि निर्मलम्॥ इति

अत एव च तत्त्वमुक्ताकल्पे—
"ननु क्वचिदपि द्रव्यनाशः । अवस्थान्तरापत्त्या चादर्शनम् । कतकरजोनिदर्शनं च वालप्रलोभनम् । न हि पयसि पङ्कः कतकरजसा शाम्यते विश्लेषमात्रदृष्टेः । न च स्वयन्तत्र नश्यत्यसंश्लेषमात्रसिद्धेः" इति ।

( ८६ ) अत एव वर्द्धमानेन--घुणोत्किरणात् कथञ्चिन्निष्पन्नलमक्षरं घुणाक्षरम् ।
तदिव यदकुशलेन दैवान्निष्पाद्यते तद्घुणाक्षरीयम् ॥
इति व्याख्यानं सफलीभवति ।

अथ च प्रसन्नराघवे--"अहो घुणाक्षरन्यायो यदिदं भ्रातरद्वयम् प्रतिमयोक्तं वन्दिद्वयम् प्रति फलितं वचः" इति च सङ्गच्छते ।

अत एव च राजतरङ्गिण्याम्--
त्रीन् वारान् समरे जित्वा जितम्मेने स मुम्मुनिम् ।
सकृज्जयमरेर्वीरा मन्यन्ते हि घुणाक्षरम् ॥ इत्युक्तिरपि सङ्गच्छतेतराम् ।



### ८७-विनायकं प्रकुर्वाणो रचयामास वानरम् इति न्यायः ।

अन्यत् कर्त्तुं सङ्कल्पे प्रमादादिना यत्रान्यत् क्रियते फलेऽनिष्टमवलोक्यते तत्रास्य प्रवृत्तिः । उन्मत्तप्रलपितमिव च तन्न श्रद्धीयते लौकिकैः ।

### ८८-कूपमण्डूकन्यायः ।

लोककथा, समुद्रनिस्सृतो मेघो विवेश कूपम्, कूपस्था मण्डूकाः पृच्छन्ति कुत आगतो भवानिति स उवाच समुद्रात् कियान्समुद्र इति पृच्छन्ति स उवाच महानिकूपस्थः कश्चनोवाच स्वजङ्घां प्रसार्य्य किमेतावानिति स उवाच नह्येवं महान्समुद्रः ततो द्वितीयजङ्घां प्रसार्य्योवाच किमेतावान्समुद्र इति पुनर्नैवंसइत्युवाच समुद्रीयो मण्डूकः कूपमण्डूक उवाच एतत्कूपसदृशो वितस्तिपरिमितो वा मच्छरीरपरिमितो वा सउवाचन ह्येवम् महत्तमस्स इति कूपमण्डूक उवाच मिथ्या त्वं प्रलपसीति तदा समुद्रमण्डूकउपजहासेति ।

### ८९ कान्तारोत्तरणन्यायः ।

कान्तारं काननं प्रोक्तमिति कोशः । कश्चन घोरकान्तारपारं गन्तुमसमर्थोऽन्यं ययाचे स त वहिर्निस्सार्य पुनरागतस्स्वस्थानम् ।

### ९० अन्धगोलाङ्गुलन्यायः ।

कश्चनधूर्त्तः वने विस्मृतमार्ग द्रव्यभूषणयुतं पुरुषं मोहयित्वा मार्गन्दर्शयामीति आश्वास्य घोरवने छलेनान्धीकृत्य तद्भूषणादिकमपहृत्य स्वस्थानङ्गतः अन्धश्च तद्वचनश्रद्धया कण्टकाविद्धपादो महद्दुःखं प्राप । तथा च धूर्त्तपाषण्डिवञ्चितमूर्खाः दुःखं लभन्ते । अयन्न्यायः तन्निष्ठस्य मोक्षोपदेशादिति शारीरकसूत्रभाष्ये ।

---

( ८८ ) अत एव प्रसन्नराघवनाटके—
"कथम्मामपि दशदिग्विलासिनी कर्णपूरीकृतकीर्त्तिपल्लवं त्रिभुवनवीरनामधेयं कूपमण्डूक इव सागरमविख्यातमपदिशसि" इति समुपपद्यते ।

अत एव च उपमितिभावप्रपञ्चे—
यो न निर्गत्य निश्शेषां विलोकयति मेदिनीम् ।
अनेकाद्भुतवृत्तान्तां स नरः कूपदर्दुरः ॥ इति समुपपद्यते ।

( ९० ) अत एव वेदान्तसूत्रशाङ्करभाष्ये—
यदि चाज्ञस्य सतो मुमुक्षोरचेतनमात्मानमात्मेत्युपदिशेत् प्रमाणभूतं शास्त्रं सश्रद्दानतयान्धगोलाङ्गुलन्यायेन तदात्मदृष्टिं न परित्यजेत्तद्व्यतिरिक्तं चात्मानं न प्रतिपद्येत, तथा सति पुरुषार्थाद् विहन्येतानर्थं च ऋच्छेत् इति ग्रन्थः सङ्गच्छते ।

### ९१ अन्धगजन्यायः ।

अन्धैर्निर्द्धारितो गजः अन्धगज इति मध्यमपदलोपिसमासः बहवो जन्मान्धाः अनन्धमूचुः अस्मान्गजं दर्शयेति, स गजशालायां तान्नीत्वा तं तं गजावयवं तेन तेन ग्राहयित्वा उवाच अयङ्गज इति । अन्धाश्च तं तं गजावयवं गजत्वेन निश्चित्य स्वस्थानमागताः परस्परं कलहं चक्रुः । कर्णावयवस्पर्शी शूर्पसदृशो गजइत्युवाच, शुण्डग्रहीता स्तम्भतुल्य इति, पुच्छग्राहकस्तु स्थूलरज्जुसमो गज इति जगाद । एवं तत्त्वमजानन्तो विवदन्ते ।

### ९२ नहिभिक्षुको भिक्षुकं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुक इति न्यायः ।

स्पष्टार्थकोऽयन्न्यायः ।

### ९३ रेखागवयन्यायः ।

ग्रामीणेन पृष्टः कीदृशो गवय इति कश्चिद्गवयाकाररेखां लिखित्वा दर्शयामासैदृशोगवय इति पृच्छकस्साधारणबुद्धिमानिति रेखागवयमेव साक्षाद् गवयम्मेने । पश्चाद् वनङ्गत्वासाक्षाद्गवयं दृष्ट्वा रेखाया स्तद्बुद्धित्त्याजेदिलौकिको निबन्धः ।

---

( ९१ ) अत एव च वार्त्तिकग्रन्थे-एवमेवैकरूपं सद्ब्रह्मस्त्वज्ञातं निरञ्जनम् ।
जात्यन्धगजदृष्ट्येव कोटिशः कल्प्यते मृषा ।। इति

नैष्कर्म्यसिद्धौ तु—तदेतदद्वयं ब्रह्म निर्विकारं कुबुद्धिभिः ।
जात्यन्धगजदृष्ट्येव कोटिशः कल्प्यते मृषा ॥ इति सङ्गच्छते ।

( ९२ ) अत एव शास्त्रदीपिकायाम्—"नच भिक्षुका भिक्षुकादाकाङ्क्षन्ति सत्यन्यस्मिन् प्रसवसमर्थकेऽभिक्षुके" इति सङ्गच्छते ।

( ९३ ) अत एव रघुनाथेन तथैव पुरुष इत्यादिभिः पूर्वोक्ततात्पर्यानभिज्ञोऽनात्मानमेवात्मतया जानीते । गुरुशास्त्रोपदेशेनात्मनि ज्ञाने तदात्मबुद्धिमपवदति इति ।

अपरञ्च वेदान्तकल्पतरुपरिमलयोः "यथा तात्त्विकारुन्धतीप्रतिपत्त्युपायतया नानापुरुषैः कल्प्यमानायां तत्प्राच्योदीच्यादिनक्षत्ररूपायां स्थूलारुन्धत्यां यथा वा रेखागवयन्यायेन नित्यशब्दप्रतिपत्त्युपायतया नानाव्याकरणैः परस्परभिन्नप्रकृतिप्रत्ययविभागेन कृत्रिमशब्द इति भावः" इति च ।

कैयटेन च भाष्ये—असत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते रेखागवयन्यायेनेव सत्यगवयस्येति ।



### ९४ शाखाचन्द्रन्यायः ।

शुक्लद्वितीयाचन्द्रदर्शनार्थम्बुद्धिमान् पुरुष आदौ दिगन्तर्गतनक्षत्रादिभ्यो दृष्टिं स्वारयितुं शाखायां चन्द्र इत्यधिकरणत्वेनोपदेशं कृत्वा चन्द्रसमीपवर्त्तितारकादिषु चन्द्रभ्रमो माभूदिति प्रकृष्टप्रकाशात्मकश्चन्द्र इति शिक्षितवान् , असत्ये वर्त्मनि स्थित्वा ततस्सत्यं समीहत इति पद्यवदुदाहरणम् ।

### ९५ अष्टावसरन्यायः ।

यस्यावसरो भ्रष्टोनियमितस्तस्य कार्यसिद्धिर्नभवति ।

### ९६ सर्वं कार्यं सकारणमिति न्यायः ।

जगतां यदि नोकर्त्ता कुलालेन विना घटः । चित्रकारम्विना चित्रं स्वत एवभवेदिति सर्वं कार्यजातं घटादिज्ञानं सकारणं मृदादिज्ञानपूर्वकम्भवति । तदुक्तम्—कारणज्ञानत॰कार्यविज्ञानञ्चापि सोऽवददिति ।

### ९७ कार्येण कारणसम्प्रत्यय इति न्यायः ।

घटादिरूपकार्येण कुलालादिरूपकारणस्य सम्प्रत्ययोभवतीति फलितार्थः ।

### ९८ देवदत्तहन्तृहतन्यायः ।

देवदत्तस्य हन्तरि हते देवदत्तस्य नोज्जीवनम् ।

---

( ९४ ) अत एव तैत्तिरीयभाष्यवार्त्तिके—तरुशाखाग्रदृष्ट्यैव सोमं यद्वत्प्रदर्शयेत् ।
निष्कोशं कोशदृष्ट्यैव प्रतीचि ब्रह्म दर्श्यते ॥

इति केषाञ्चिद् वचः श्रूयते ।

अत एव च विवरणप्रमेयसंग्रहे—

"नन्वत्र सूत्रे ब्रह्मस्वरूपलक्षणं नोक्तं न च तदन्तरेण स्वरूपमवगम्यते प्रकृष्टप्रकाशात्मत्वमनुक्त्वा शाखाग्रे चन्द्र इत्येवोक्ते चन्द्रस्वरूपानवगमात । इत्यपि ग्रन्थः ।

( ९५ ) एवञ्च परिभाषेन्दुशेखरे नागेशः—

"अत एव निर्देशाद् भ्रष्टावसरन्यायस्यात्र शास्त्रे नाश्रयणम् ।
ध्वनितं चेदमिकोगुण इति शास्त्रे भाष्यप्रदीपोद्योते निरूपितम्" ॥
इति ग्रन्थः सङ्गच्छते ।

तन्त्रवार्त्तिककारैरपि "यदपि यजमानस्य भ्रष्टावसरं क्रियमाणं विगुणं भवतीति तदपि गुणलोपे मुख्यस्येत्यनेन विरुद्धम्" इति प्रोक्तम् ।

( ९८ ) अत एव रघुनाथः—"नन्वज्ञानबाधके ज्ञाने विनष्टे पुनरज्ञानोदयेन बन्धप्रसङ्ग इति शङ्कायां देवदत्तहन्तृहतन्यायावतारः । यथा देवदत्तहन्तरि हतेऽपि न देवदत्तस्य जीवनं तथा प्रकृतेऽपि" इति ।

## ९९ देवदत्तहननोद्यतहतन्यायः ।

देवदत्तहननोद्यतस्य हनने तु देवदत्तस्योज्जीवनम्भवत्येव ।

## १०० नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभत इति न्यायः ।

यद्यपि द्वित्वव्यापकता त्रित्वे तथापि वाक्यस्य सावधारणत्वात् पुत्रत्रयवतः पुत्रद्वयवत्त्वेऽपि न तस्य द्विपुत्रशब्दवाच्यत्वम् ।

## १०१ गड्डलिकाप्रवाहन्यायः ।

गड्डलिका लोके गडेरिया इति प्रसिद्धिः, अर्वानाम भेड़िया इति लोकप्रसिद्धिः समुदायादेका चेत्कूपे पतिता सर्वा अपि कूपे तस्मिन् पतन्ति । भेडियाधसान इति प्रसिद्धिः ।

## १०२ अन्धपरम्परान्यायः ।

अन्धेन नीयमाना अन्धा एवापतन्ति ।

---

अन्यत्र च परिभाषेन्दुशेखरकाराः--"अत्र देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं नेतिन्यायस्य विषय एव नास्ति । हते देवदत्त उन्मज्जनं न । देवदत्तहननोद्यतस्य हनने तु भवत्येवोन्मज्जनम्" इति ।

अथ च महाभाष्ये--"नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति" इति विराजते ।

( १०० ) अत एव व्याकरणमहाभाष्यकृता "अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । इहापि यथा स्यात् । समुपाभिच्छाद इति तर्हि न वक्तव्यम् । यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तस्तत्राद्व्युपसर्गस्येत्येव सिद्धम् । नवा एष लोके सम्प्रत्ययः । न हि द्विपुत्र आनीयतामित्युक्ते त्रिपुत्र आनीयते । तस्माद् द्विप्रभृत्युपसर्गस्येति वक्तव्यमि"ति कथितं सङ्गच्छते ।

( १०१ ) एवञ्च वाचस्पतिना यत्र वार्यमाणानामपि अनिष्टकार्ये प्रवृत्तिस्तत्रास्य न्यायस्य विषयता ।

अत्र ध्वन्यालोके काव्यप्रदीपे च गड्डरिका, गड्डारिका, गड्डालिका इति वा नामावीनां कैश्चिदनुसन्धीयते ।

( १०२ ) अत एव ब्रह्मसूत्रभाष्ये शाङ्करे "अनादित्वेऽपि अन्धपरम्परान्यायेनाप्रतिष्ठानवस्था व्यवहारलोपिनी स्यान्नाभिप्रायसिद्धिः" वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषादन्धपरम्परान्यायापत्तेः" इत्युक्तम् ।

एवमेव साङ्ख्यसूत्रे--"इतरथान्धपरम्परा" पदमर्थाम्-अन्धपरम्पराप्रसङ्गः" इत्यादि च श्रूयते ।



## १०३ वटे यक्षन्यायः ।

इह वटे यक्षस्तिष्ठति ऐतिह्यप्रमाणमूलकोऽयन्न्यायः ।

## १०४ पटदग्धन्यायः ।

पटैकदेशे दग्धे पटोदग्ध इति ग्रामैकदेशे दग्धे ग्रामो दग्ध इति व्यवहारः ।।

## १०५ मल्लग्रामन्यायः ।

अन्यजनेषु सत्स्वपि मल्लानां बहुत्वात् मल्लग्राम इति व्यपदेशः । पण्डितानां बाहुल्यात् पण्डितग्राम इति, चौराणां बहुत्वात् चौरग्राम इति व्यपदेशः ।

---

अत एव पदमञ्जर्यांशौ-तत्र ये साधवस्ते शास्त्रेणानुशिष्यन्तेऽसाधुभ्यो विविक्ताः प्रकृतिप्रत्ययविभागेन ज्ञाप्यन्त इमे साधव इति । कथम् पुनरिदमाचार्येण पाणिनिनावगतमेते साधव इति । आपिशलेन पूर्वव्याकरणेन । यद्येवमन्धपरम्पराप्रसङ्गः । तद्यथा शुक्लं क्षीरमित्यन्धेनोक्ते केनेदमवगतमिति पृष्टो यदाऽन्धान्तरं मूलं निर्दिशति सोऽप्यन्धान्तरं नैतद्वचः शौक्ल्ये प्रमाणं भवति तादृगेतत्" इति प्रोक्तमुपपद्यत इति ।

( १०२ ) अत एव न्यायसूत्रविवरणे—"ऐतिह्यमिह वृक्षे यक्षः प्रतिवसतीति लोकप्रसिद्धिः । तत्र मूलवक्त्रनिर्देशेन आप्तोक्तत्वानिश्चयेन तादृशनिश्चयस्य शाब्दबोधहेतुतया नास्य शब्दप्रमाणेऽन्तर्भावः" इति ।

अथ च न्यायमञ्जरीकाराः—नच प्रसिद्धिमात्रेण युक्तमेतस्य कल्पनम् ।
निर्मूलत्वात्तथा चोक्तं प्रसिद्धिर्वटयक्षवत् ॥ इति ।

ऐतिह्यन्तु न सत्यमत्र हि वटे यक्षोऽस्ति वा नेति वा,
को जानाति कदाच केन कलितं यक्षस्य कीदृग् वपुः ॥ इति

श्लोकवार्त्तिके—जगति बहु न तथ्यं नित्यमैतिह्यमुक्तं,
भवति तु यदि सत्यं नाग भाद् भिद्यते तत् । इति सर्वत्र तत्र तथोक्तं सङ्गच्छते ।
अस्य दग्धपटन्याय इति स्वरूपमपि ।

( १०४ ) अत एव वेदान्तसारटीकायाम् "यद्वा सर्वं खल्विदं ब्रह्मैतदात्म्यमिदं सर्वमित्यादिश्रुतिबलात् सर्वमहमिति गिरिनदीसमुद्रात्मकं सर्वं जगत्स्वाभिन्नसच्चिदानन्दब्रह्मत्वे नानुभूय तस्य दग्धपटन्यायेन प्रपञ्चमानेऽप्यद्वैतं सच्चिदानन्दलक्षणं वस्तु भासत एवेत्यर्थः । अथच "तत्रैव नन्वेतादृशस्य जीवन्मुक्तस्य देहेन्द्रियादिभानमस्ति न वेत्याशंक्य दग्धपटन्यायेनेन्द्रजालमुद्रितसौधमुद्रादिवच्च बाधितानुवृत्त्या मिथ्यात्वेन भानेऽपि परमार्थतया भानं नेत्याह अयमित्यादिना न पश्यन्तीत्यन्तेन" इति ग्रन्थः सङ्गच्छतेतराम् ।

### १०६ पारिषदन्यायः ।

समज्यापरिषद्गोष्ठी सभा-पारिषदः सभ्यः तेषामेकस्मिन् कृतेपि अवशिष्टैस्तत्कार्यनिर्वाहो यथा भवति तथान्यत्रापि ।

### १०७ नान्यदृष्टं स्मरत्यन्य इति न्यायः ।

शरीरस्य नचैतन्यं मृतेषु व्यभिचारत इति तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ।

### १०८ वृद्धब्राह्मणवरन्यायः ।

तत्र कार्येऽक्षमत्वज्ञौ तद्भारविसर्ग एव फलति । यथायोग्यं कार्यनियुक्तश्शोभते इति तत्त्वम् ।

### १०९ त्रिर्बद्धस्सुबद्धंभवतीति न्यायः ।

एकेनैव कारणेन कार्यसिद्धौ कारणान्तरस्यापि सन्निधापनेऽयन्न्यायः प्रवर्त्तते । एवमेव प्रश्नवादिना क्रियमाणे प्रतिवादिना यत्र सदुत्तरद्वयं ततोऽप्यधिकं वा क्रियते तादृशेषु न्यायस्यास्य विषयता ।

### ११० अजागलस्तनन्यायः ।

अजागलस्तनौ स्तनाकारौ मांसौ विकृतौ यथा निरर्थकौ तथा प्रकृतेऽपि ।

### १११ धान्यपलालन्यायः ।

धान्यानयने पलालानयनं सुतराम्भवतीति ।

### ११२ मत्स्यकण्टकन्यायः ।

मत्स्यमांसाशी तत्सम्बद्धकण्टकानपि गृह्णाति पश्चात्त्यजति तथेश्वरविषयको विचारः ।

### ११३ अब्भक्षन्यायः ।

अब्भक्षोऽयं ब्राह्मण इत्युक्तौ तदितरान्नादिभक्षणनिषेधोऽवगम्यते ।

### ११४ वायुभक्षन्यायः ।

पूर्ववत्स्पष्टार्थकोऽयन्न्यायः ।

---

(१०७) अत्र च कुसुमाञ्जलीकाराः—

नान्यदृष्टंस्मरत्यन्यो नैकम्भूतमपक्रमात् ।
वासनासंक्रमो नास्ति नच गत्यन्तरं स्थिरे ॥ इति पूरयन्ति ।



### ११५ स्थालीपुलाकन्यायः ।

पुलाकस्सिद्धभक्तके इति कोशः, स्थाल्यामेकमोदनं सिद्धं दृष्ट्वा सर्वम्पक्वं जातमिति अनुमीयते ।

### ११६ रथकाराधिकरणन्यायः ।

वर्षासु रथकारोऽग्नीनादधीतेतिश्रुतिः । रथकारशब्दः संज्ञावाचकः यौगिको वा श्रुतिसामर्थ्यात् संज्ञा वाचकत्वेन रथकारपदेन ( वढई ) इति लोकप्रसिद्धस्य शूद्रस्यापिग्रहणम् ।

### ११७ राहोश्शिरोन्यायः ।

राहुश्शिरः कबन्धः केतुरिति निश्चयः, कबन्धोराहुः शिरः केतुरित्यपि मतम् ।

### ११८ कनककुण्डलन्यायः ।

सुवर्णजकुण्डलस्य सुवर्णाऽभिन्नत्वम्, जगद् ब्रह्मणोरभिन्नत्वम् ।

### ११९ शीलं हि विदुषांधनमिति न्यायः ।

स्पष्टार्थकोऽयन्न्यायः ।

### १२० क्षीरदग्धजिह्वान्यायः ।

तप्तक्षीरेण दग्धजिह्वः कश्चित्तक्रं फूत्कृत्य पिबति । एवंवाक्यार्थेऽस्य न्यायस्य प्रयोगः ।

### १२१ फलमुखगौरवन्नदोषावहमितिन्यायः ।

यत्र गौरवे फलसम्पत्तिर्भवेत्तत्रायन्न्यायः प्रवर्त्तते ।

### १२२ आगन्तुकानामन्तेनिवेश इति आगन्तुकानामग्रेनिवेश इति वा न्यायौ ।

आगन्तुकोऽनित्यस्थायी इति इकोगुणवृद्धी" इति सूत्रभाष्ये ।

---

( ११५ ) अत एव पातञ्जले महाभाष्ये "पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनाय" इति ।

एवमेव जैमिनीयशाबरे भाष्ये "लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकन्यायेन । एतन्न्यायपूर्वकं लिङ्गमेकत्रापि दृश्यमानं तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति । यथा स्थाल्यां तुल्यपाकानां पुलाकानामेकमुपपद्यान्येषामपि सिद्धतां जनाति" इति स्पष्टं सङ्गतम् ।

अथ च हेमचन्द्रेण परिशिष्टपर्वणि "सिक्थेनापि द्रोणपाकं जानन्ति हि मनीषिणः" इति कथनमप्युपपद्यते ।

† १२३ मत्तकाशिन्याद्दृष्टातिर्यक्षुकमितीति न्यायः।

मत्तकाशिनो स्त्रीविशेषः। अत्रकोशः-वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी इति।

१२४ शते पञ्चाशदितिन्यायः।

व्यापकशतसंख्यायां व्याप्यपञ्चाशत्संख्या निविष्टा। यत्र व्यापके व्याप्यस्य निवेशस्तत्रायन्न्यायः प्रवर्त्तते।

१२५ शतपत्रपत्रभेदन्यायः।

सूच्या शतपत्रभेदने बहुकालापेक्षणम्। प्रथमक्षणे सूचीक्रियया तस्याः पत्रेण संयोगः, द्वितीयक्षणे पत्रावयवयोः, तृतीयक्षणे तयोर्विभागः, तुरीय आरम्भसंयोगनाशः, पञ्चमे पत्रनाश इति प्रतिपत्रभेदनेऽनेककालापेक्षा। एवं दीर्घशष्कुलीभक्षणेऽनेककालापेक्षणम्।

१२६ विलवर्त्तिगोधान्यायः।

विले गर्ते स्थिता गोधा न विभजनीया भवति अदृष्टत्वात्। गोधापदं विलसर्पादीनामुपलक्षणम्।

१२७ मणिमन्त्रन्यायः।

मणिमन्त्रौषधादिसम्बन्धेन वह्निदाहप्रतिबन्धः स्वातन्त्र्येणेति लोकप्रसिद्धिः।

---

(१२५) अत एव कुवलयानन्दे—

विश्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं,
शल्यं यद् विदधाति सा विधुरिता साधो तदाकर्ण्यताम्।
शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेंखति'
भ्राम्यत्युल्लुठति प्रणश्यति गलत्युन्मूर्च्छति त्रुट्यति॥

अत्रकासाञ्चित् क्रियाणां किञ्चित्कालभेदसम्भवेऽपि शतपत्रपत्रशतभेदन्यायेन यौगपद्यं विरहातिशयद्योतनाय विवक्षितमिति लक्षणानुगतिः" इति ग्रन्थोऽपि सङ्गच्छते।

(१२५) अत एव च न्यायकन्दलीकाराः—

"यद् गच्छति तत्सन्निहितव्यवहितार्थौ क्रमेण प्राप्नोति तत्कथं शाखाचन्द्रमसोस्तुल्यकालोपलब्धिरिति चेदिन्द्रियवृत्तेराशुसञ्चारित्वात् पलाशशतव्यतिभेदवत् क्रमाग्रहणनिमित्तोऽयम्भ्रमो नतु वास्तवं यौगपद्यम्" इति ग्रन्थः।

अन्यत्र च श्लोकवार्तिके--

यत्प्रदीपप्रभाध्यक्षं सूक्ष्मकालोऽस्ति तत्र नः।
दुर्लक्षस्तु तथा वेधः पद्मपत्रशते तथा॥ इति श्रूयते॥

(१२७) वाचस्पत्याम्-मणिमन्त्रादीनां वह्नेर्दाहम्प्रति यथा स्वातन्त्र्येण प्रतिब-



१२८ यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायः।

घटत्वकुलालकृतित्वादिना कार्यकारणभावे सिद्धे कार्यत्वेन कृतित्वेन च कार्यकारणभावः। घटादिकं प्रति नैव द्रव्यत्वेन कारणता कुलालकृतेर्नैव जातित्वेन कारणतेति।

१२९ शङ्खवेलान्यायः।

यथा वेलाविशेषे शङ्खध्वनिविशेषः नियमितः तत्र शङ्खध्वनिना वेलाविशेषज्ञानं जायते। चैत्रोत्तरम्वैशाखः वैशाखोत्तरं ज्येष्ठइति क्रमविशेषज्ञानम्।

१३० समुद्रमापः प्रविशन्ति यद्वत् इति न्यायः।

सर्वे नदा नद्यश्चानेकगुणविशिष्टास्स्वनिष्ठगुणविशेषं परित्यज्य समुद्रत्वसंज्ञाभिलापया समुद्रं प्रविशन्तीति।

१३१ सर्वे वेदा यत्पदमामनन्तीतिन्यायः।

सर्वस्यापि शास्त्रस्य तात्पर्यन्निर्विशेष एव ब्रह्मणीति तत्त्वम्।

१३२ कपिञ्जलाधिकरणन्यायः।

कपिञ्जलानालभेतेति मीमांसकवाक्यम्, कपिञ्जलानिति बहुवचनम्, सर्वेषामानयनाऽसम्भवः, सर्वाऽनयनाऽसम्भवे श्रुत्यर्थाऽसङ्गतिः। पूतक्रत्वादीनां पुंयोगप्रकरणे वचनमिति व्याकरणवार्त्तिकवत् त्रित्वस्य पुरस्स्फूर्तिकतया तत्रैवसिद्धान्तसङ्गतिः।

---

न्धकत्वं लोकसिद्धं नच तत्र युक्त्यपेक्षा, एवं कामिनीजिज्ञासाया अपि ज्ञानमात्रम्प्रति प्रतिबन्धकत्वमित्येवं यत्र पृथक् प्रतिबन्धकत्वं तत्रास्य प्रवृत्तिरिति फलितार्थः।

(१३२) एवञ्च न्यायमालाविस्तरे—

"कपिञ्जलेषु त्रित्वाद्या ऐच्छिकात्रित्वमेव वा।
आद्यो बहुत्वसाम्यान्न त्रित्वेनैव कृतत्वतः॥

अथमेवे "वसन्ताय कपिञ्जलानालभते" इति त्रित्वचतुष्ट्वादिसंख्यानां बहुत्वसाम्यादिच्छया या काचिद् बहुत्वसंख्यास्वीकार्येति चेत्? नहि त्रित्वेनैव शास्त्रस्य कृतत्वात्। यो हि चतुष्ट्वादिसंख्यामुपादत्ते तेन न तदन्तर्भूतं त्रित्वं वर्जयितुं शक्यं त्रित्वमुपाददानेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं शक्यते। अतोऽवश्यम्भावित्वेन लाघवेन च त्रित्व उपात्ते शास्त्रार्थसिद्धौ ततोऽधिकपक्षिहिंसायां प्रत्यवायात्। तस्मात्त्रित्वमेवोपादेयम्" इति ग्रन्थोऽपि संलग्नः।

### १३३ नटाङ्गनान्यायः ।

रङ्गभूमावागतां नटभार्यां योयो नटः पृच्छति कस्य भार्याऽसीति सा तन्तं प्रति तवैवेति लोकप्रसिद्धिः ।

### १३४ बहूनामनुग्रहो न्याय्य इति न्यायः ।

बहूनामप्यसाराणां मेलनं कार्य्यसाधकम् ।
तृणैस्सम्पाद्यते रज्जुस्तया नागोऽपि बध्यते ॥

### १३५ आम्रान् पृष्टः कोविदारानाचष्टे इति न्यायः ।

अन्यद्भवान् पृष्टः कोविदारानाचष्टे अन्यद् भवान् पृष्टोऽन्यदाचष्टे इतिफलति ।

### १३६ पञ्जरमुक्तपक्षिचालनन्यायः ।

यथा पञ्जरमुक्ताः पक्षिणस्सदोर्द्ध्वमेव चलन्ति तथा जीवोदेहान्मुक्तस्सदोर्द्ध्वमेव गच्छति ।

---

( १३४ ) क्वचिच्च एतत्प्रकाराणामपि—
बहूनामप्यसाराणां समवायो हि दुर्जयः ।
तृणैरावेष्टयते रज्जुर्यन नागोऽपि बध्यते ॥ इति पाठः

( १३५ ) अतएव लौकिकन्यायरत्ने "तथाहि लोके प्रकृष्टप्रकाशश्चन्द्र इत्यत्र प्रकृष्टपदेनाप्रकृष्टखद्योतादेः प्रकाशपदेनाप्रकाशात्मकान्धकारादेश्च व्यवच्छेदेन जिज्ञासितश्चन्द्रः प्रातिपदिकमात्रार्थः प्रतिपाद्यते । इतरथा आम्रान् पृष्टः कोविदारानाचष्टे इति न्यायेन वक्तुरजिज्ञासितमर्थम्प्रतिपादयतोऽश्रद्धेयवचनत्वप्रसङ्गात्" इति वादः ।

अत एव भामत्यां यद्यप्याकाशपदम्प्रधानार्थं तथापि यत् पृष्टं तदेव प्रतिवक्तव्यम् । नखल्वनुन्मत्त आम्रान् पृष्टः कोविदारानाचष्टे इत्युक्तं सङ्गच्छते वेदान्तकल्पतरौ च "जीवे पृष्टे तं दुर्दर्शमिति तद्व्यतिरिक्तपरमात्मप्रतिवचनमात्रप्रश्ने कोविदारप्रतिवचनवदसङ्गतम्" इति ।

( १३६ ) अत एव वेदान्तकल्पतरुपरिमलोक्तं "जीवस्योर्ध्वगमनं स्वभावः । देहे स्थितिस्तत्प्रतिबन्धककर्माधीने तिमतमाश्रित्योक्तम् । केचित्त चिरकालशरीरावस्थितप्रयुक्तबन्धमुक्तावुर्ध्वगमनं मन्यन्ते । ते खल्वेवमाहुः—बन्धमुक्तस्योर्ध्वगमनं दृष्टं यथा पञ्जरमुक्तशुकस्य यथा वा वारिनिर्भिन्नपरिणतैरण्डबीजस्य यथा वा दृढपङ्कालिजलनिमज्जनप्रक्षीणपङ्कलेपशुष्कालाबूफलस्य" इति सङ्गच्छते ।



### १३७ एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवतीति न्यायः ।

हस्तिपकदर्शनमङ्कुशदर्शनम्वा हस्तिस्मारकम्भवति ।

### १३८ जलतुम्बिकान्यायः ।

जलेऽधिकेऽपि तुम्बिकोर्द्ध्वमेव तिष्ठति तुम्बिका तृणकाष्ठं च वैरं जलसमागमे ।
ऊर्ध्वमेव प्रयान्त्येव रेफस्य तादृशी गतिः । इतिकारिका । अनेन न्यायेन रेफस्योर्द्ध्वगमनमिति शाब्दिकः ।

### १३९ जलतैलन्यायः ।

जले तैलमुपर्य्येव तिष्ठति इति । अतएव "पुष्करपलाशवन्निर्लेपः किन्तु चेतनः" इति सिद्धान्तमुक्तावलीग्रन्थः ।

### १४० तृणजलौकान्यायः ।

जलौका पूर्वं तृणं परित्यज्यापरमनुसन्धते तथा जीवोऽपि देहान्तरं लभते

### १४१ वृद्धब्राह्मणवरन्यायः ।

जन्मान्धो दरिद्रोऽजातविवाहः तपश्चर्य्यांचकार । प्रसन्नोभगवान् वरं वृणीष्वेत्युवाच । जन्मान्धो विचारयति यदि नेत्रयाचना तदा दरिद्रता तिष्ठेदेव यदि विवाहोयाच्यस्तदा जन्मान्धदरिद्रते तिष्ठेतामेव, धने याचिते जन्मान्धत्वदुःखं चिरन्तिष्ठेत् । एवं मनोनिष्ठे विचारे स्वपौत्रराजसिंहासनस्थितमीक्षितुमिच्छामीतिवरं ययाचे तदाभार्या सन्ततिः धनञ्चेश्वरस्तदिच्छया सर्वन्ददौ-अनेकलाभः ।

### १४२ अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् इति न्यायः ।

अर्के गृहकोणे यदि मधुलाभस्तर्हि पर्वतगमनं मध्वर्थं व्यर्थमेव । तथा स्वात्मनि ब्रह्म विज्ञाय ब्रह्मवेत्ता न तीर्थादौ भ्रमति, अल्पीयसा प्रयत्नेन कार्यसिद्धौ नाधिकः श्रम इति ।

---

अतएव न्यायप्रदीपतर्कभाषासिद्धान्तः—

( १३७ ) यथा हस्तिपकदर्शनं हस्तिस्मारकं तथा नद्यादिज्ञानस्य कुशकाशजलतुम्बिकाजलूकानां तत्सम्बन्धिनां स्मरणहेतुत्वम् ।

एकसम्बन्धिदर्शनमन्यसम्बन्धिस्मारकमिति केचित् पठन्ति । तत्र ज्ञानसामान्यं दर्शेरर्थः । अतएव विश्वनाथभट्टाचार्येण न्यायसिद्धान्तमुक्तावल्यां घटपदादाकाशस्मरणे जाते तस्यापि घटविषयकशाब्दबोधे प्रवेशापत्तिवारणाय वृत्त्या पदजन्यपदार्थोपस्थितिः कारणमिति प्रादर्शि ।

१४३ काक≍कृष्ण≍पिक≍कृष्ण इति न्यायः ।

काक≍कृष्ण≍पिक≍कृष्ण≍को भेद≍पिककाकयोः ।
प्राप्ते वसन्तसमये काक≍काक≍पिक≍पिकः इति भावः ।

१४४ सुप्तप्रबुद्धन्यायः ।

क्षीराब्धौ सुप्तो विष्णुर्जगत्सिसृक्षया प्रबुद्धो जजागारेत्यर्थः ।

१४५ य≍कल्पस्तत्कल्पपूर्व इतिन्यायः ।

य≍कल्प इति न्याये प्रमाणन्तु "यथा पूर्वमकल्पयदि"ति वेदमन्त्रः। ईश्वरो गत कल्पीयं वेदंस्मृत्वोपदिशति वेदोऽनादिरिति कृतान्तः ।

१४६ गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यादिति न्यायः ।

गुणे शुक्लादय≍पुंसि गुणिलिङ्गास्तुतद्वति ।
अथद्रव्याश्रिताज्ञेया निर्गुणा निष्क्रियास्ततः
उपैत्यन्यज्जहात्यन्यद्दृष्टो द्रव्यान्तरेष्वपि ।
वाचकसर्वलिङ्गानां द्रव्यादन्यो गुणस्स्मृत इति महाभाष्यम् ।

१४७ अनुवृत्तिन्यायः ।

अनुवृत्तिस्सेवा अभ्यास इति यावत् । अभ्यासप्रावल्यविवक्षायामयन्न्यायः ।
सिंहोबली द्विरदशूकरमांसभोक्ता सम्वत्सरेण कुरुते रतिमेकवारम् ।
पारावत≍खरशिलाकणभोजनोऽपि कामीति नित्यमनुवृत्तिरिहापि हेतुः ।

१४८ दुःखमेव सर्वविवेकिन इति न्यायः ।

स्पष्टार्थकोऽयन्न्यायः ।

१४९ चतुर्व्यूहन्यायः ।

चत्वारोव्यूहा विभागा इति यावत् हेयम् १ हानम् २ हेयहेतुः ३ हानोपायश्च ४ चिकित्साशास्त्रे रोगः आरोग्यम् निदानम् भैषज्यमिति चत्वारो व्यूहाः ।

१५० अर्द्धवैशसन्यायः ।

वैशसं हिंसा, अर्द्धशरीरादिहिंसा न युक्तेति ।

१५१ बधिरान्मन्दकर्णश्श्रेयानितिन्यायः ।

स्पष्टार्थकः ।



१५२ सक्तुन्यायः ।

अनेन न्यायेन कर्मकारकप्राधान्ये परित्यक्ते स्वतन्त्रादृष्टमेवात्रापि स्यादित्यत आह यथाश्रुतोपपत्तेर्न सक्तुन्याय इति ।

सक्तुषु गत्यभावात् श्रुतं परित्यज्य अश्रुतं कल्प्यतामत्र नेह तद्युक्तम् प्रदर्शितत्वादित्यर्थ इति मीमांसाशास्त्रम् ।

१५३ अङ्गुल्यग्रे करिणां शतमितिन्यायः ।

स्पष्टार्थकः ।

१५४ प्रकरणाद्वाक्यं बलीय इति न्यायः ।

प्रकरणस्वञ्च शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहु≍प्रकरणञ्चामग्रन्थभेदं विपश्चितः ॥

१५५ विश्वजिन्न्यायः ।

विश्वजिता यजेत । यत्रार्थवादवाक्ये फलन्न श्रूयते तत्र स्वर्ग≍फलं कल्प्यते इति न्यायविषयः । एवमन्यत्रापि ।

---

( १५३ ) अत एव विवरणप्रमेयसंग्रहे "अत्रकेचिच्चोदयन्ति, व्यर्थोऽयं व्युत्पत्तिनिरूपणप्रयासः । शब्दस्यार्थासंस्पर्शित्वात् । नह्यङ्गुल्यग्रे हस्तियूथशतमास्ते इत्यादिशब्दैः कश्चिदर्थः प्रमीयते । यत्राप्तवाक्ये प्रमीयते तत्रापि मानान्तरनिबन्धना सा प्रमितिर्न शब्दनिबन्धनेति" इति ।

अत एव च चित्सुखयाम् "आप्तोदीरतवाक्येषु मालतीमाधवादिषु । व्यभिचारान्न तद्युक्तमाप्तत्वस्यानिरुक्तितः ॥ स्वकपोलकल्पितमालतीमाधवादिवाक्येषु प्रामाण्याभावादतिव्याप्तिः । न हि पुराप्त एव सन्नाटकनाटिकादिप्रबन्धविरचनमात्रेणानाप्तो भवति भवभूतिः । उक्तं चैतदुम्बकेन "यदाप्तोऽपि कस्मैचिदुपदिशति नत्वयाननुभूतार्थविषयं वाक्यं प्रयोक्तव्यं यथाङ्गुल्यग्रे हस्तियूथशतमास्त इति तत्रार्थव्यभिचारः स्फुटः" इति ग्रन्थोऽपि ।

( १५५ ) अत एव शबरस्वामी–"अनादिष्टफले कर्मणि स्वर्गः फलम् इति प्रत्ययो लोके । एवमुच्यते, आरामकृद्देवदत्तो नियतोऽस्य स्वर्गः । तडागकृद्देवदत्तो नियतोऽस्यस्वर्ग इति । इत्थमनेन न्यायेन स्वर्गसम्प्रत्ययो भवति यस्मात् स्वर्गफलेषु कर्मसु फलेष्वेषु फलवचनं नैवोच्चारयन्ति गम्यत एवेति । तस्मादप्यवगच्छाम एवं जातीयकेषु स्वर्गः फलमिति" प्राह ।

अत एव च भामतीकाराः—"नच ब्रह्मभूयादन्यदमृतत्वार्थवादिकं किञ्चिदस्ति येन तत्काम उपासनायामधिक्रियेत, विश्वजिन्न्यायेन तु स्वर्गकल्पनायां तस्य सातिशयत्वं क्षयित्वं चेति न नित्यफलत्वमुपासनायाः" इति

### १५६ निषादस्थपतिन्यायः ।

निषादस्थपतिं याजयेदिति वाक्यम् । निषादश्चासौ स्थपतिरिति कर्मधारयो न तु तत्पुरुषो लक्षणागौरवात् । स्थपतिः षष्ठ इति लोकश्रुतिप्रामाण्यात् शूद्रस्यापि यागाधिकारः ।

### १५७ नानार्थे तात्पर्याद्विशेषावगतिरिति न्यायः ।

हरिरिन्द्रो हरिर्भानुर्हरिस्सिंहो हरिःकपिरिति कोशः । अनेकार्थको हरिशब्दः, तात्पर्येण तत्तद्वाक्येऽर्थसङ्गतिः ।

### १५८ प्रतिभातश्च पश्यन्ति सर्वं प्रज्ञावतां धिय इति न्यायः ।

बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा ।
प्रज्ञान्नवनवोन्मेषशालिनी प्रतिभाम्विदुरिति कोशः ।

### १५९ गिरिमुत्पाट्य मूषिकोद्धृतेति न्यायः ।

गिरिखनने मूषिकाया एव लाभः अल्पलाभार्थं बहुश्रमो यत्र तत्रायन्न्यायः ।

### १६० अजझल्न्यायः ।

अचस्स्वराः हलो व्यञ्जनानि । अत्र श्लोकः-एकाकिनोऽपि राजन्ते सारसत्त्वास्स्वरा इव । व्यञ्जनानीव निस्सत्त्वाः परेषामनुगामिनः ॥

### १६१ स्वस्थे चित्ते वृत्तयस्संस्फुरन्तीतिन्यायः ।

चिन्ताक्रान्तं धातुबद्धं शरीरं नष्टेचित्तेधातवो यान्ति नाशम् ।
तस्माच्चित्तं सर्वतो रक्षणीयं स्वस्थे चित्ते वृत्तयस्सँस्फुरन्ति ॥ स्पष्टार्थकोऽयन्न्यायः ।

### १६२ नामार्थयोरभेदान्वय इति न्यायः ।

णम् प्रह्वत्वे शब्देचेति धातुः । नम्यतेऽभिधीयतेऽर्थोऽनेनेतिविग्रहे नामन् सीमन्निति निपातितःनमति आख्यातार्थं प्रति विशेषणीभवतीति नामेति यास्काचार्य्यः ।

---

वेदान्तकल्पतरौ च "सन्निहितकरणोपकारे सम्भवति न विश्वजिन्न्यायेन स्वर्गकल्पना नापि दर्शपूर्णमासफलस्वर्गस्यानुषङ्गः" इति निगदितम् ।

न्यायमञ्जर्यामपि—परप्रकरणपरिपठनविरहाच्च नास्य सम्पदादिविधिवत् प्रधानाधिकारिनिवेशित्वमतो विश्वजिदधिकरणन्यायेन स्वर्गकामसधिकारिणमिह यावदुपात्तमध्यवसामस्तावदेव च न पुनरावर्त्तते" इत्युक्तम् ।

( १५६ ) अत एव वाचस्पतिमिश्रा अपि "अत्र तावन्निषादस्थपतिन्यायेन षष्ठीसमासात् कर्मधारयो बलीयान् इति स्थितमेव तथापीह षष्ठीसमासनिराकरणेन कर्मधारयस्थापनाय लिङ्गमप्यधिकमस्तीति तदप्युक्तं सूत्रकारेण" इत्यभिदधति ।



द्विधा नियमः नामार्थयोरभेद एवेति, अभेदो नामार्थयोरेवेति वा । आद्ये राज्ञस्सुतस्य धनमित्यादौ व्यभिचारः। द्वितीये स्तोकं पचति । अग्रे स्वयमूह्यम् । निपातातिरिक्तप्रातिपदिकार्थयोः क्रियानिपातातिरिक्तप्रातिपदिकार्थयोश्च साक्षाद्भेदसम्बन्धेनान्वयोऽव्युत्पन्न इति सिद्धनियमः । विस्तरभिया नाधिकः प्रपञ्चः ।

### १६३ यद्विवाहस्तद्गीतगानमिति न्यायः ।

यद्वधूवरयोर्विवाहो गानमपि तत्सम्बन्धि गीयते नान्यदिति। अतएव शिवविष्ण्वादिदेवानां तत्तन्माहात्म्यगानाच्च न विरोधः, नापि पुराणानाम् विरोधः ।

### १६४ सन्निहिते बुद्धिरन्तरङ्गमिति न्यायः ।

सन्निकृष्टविप्रकृष्टयोरुभयोर्यत्रान्वयसम्भावना तत्र सन्निहितस्यैवासत्तिबलादन्वयो न विप्रकृष्टस्येत्येवं विवक्षायामस्य न्यायस्य प्रवृत्तिः ।

### १६५ गोश्रृङ्गग्राहिकान्यायः ।

केनचित् पृष्टः अस्माकं गौः केति कश्चित् गोश्रृङ्गमादाय हस्तेन इयन्ते गौरिति दर्शयति, तथा आत्मा क इति प्रश्ने यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्तीति सत्यंज्ञानमनन्तं ब्रह्मेति च आभ्यां ब्रह्मोपदेशः।

### १६६ पिपीलिकागतिन्यायः ।

पिपीलिका वृक्षशिरस्स्थितमधुरफलरसास्वादने झटित्यशक्ता शनैश्शनैर्गच्छन्ती अधिककालेन तद्रसमवश्यमुपलभते तथा जन्मान्तरीयपुण्येन ब्रह्मज्ञानम् ।

### १६७ अधिकन्तु प्रविष्टं न तद्धानिरिति न्यायः ।

यत्राधिकप्रवेशेऽपि न प्रकृतस्य हानिस्तत्रायं न्यायः प्रवर्त्तते ।

### १६८ श्यामरक्तन्यायः ।

घटपटादौ श्यामगुणनाशो रक्तगुणोत्पत्तिरिति पूर्वगुणनाशेऽपरगुणसम्बन्धोऽत्र मूलम् ।

---

( १६९ ) अत एव शङ्करानन्दः आत्मप्रदीपे—

शास्त्रं चात्र प्रवृत्तं सत प्रवृत्तिं कुरुते द्विधा ।
विधानेन निषेधेन लोकदृष्टिसमाश्रयात् ॥
श्रृङ्गग्राहिकया यद्धि बोधयेत्तद् विधायकम् ।
यथा लोके करे तेऽस्ति फलमित्यादिभाषणम् ॥ इति ।
अपरेऽपि—न तावत्समवायेन भेदसम्बन्धगौरवात् ।
शब्दानां समयोऽप्येवं श्रृङ्गग्राहिकया लघुः ॥ इति

### १६९ क्रियाभेदात्फलभेद इति न्यायः ।

स्पष्टार्थकोऽयन्न्यायः ।

### १७० कूपखानकन्यायः ।

अर्थः—यथा कूपखानके पतितं पङ्कादि कूपान्निस्सृतेनाम्भसा प्रक्षाल्यते तथा तत्तद्विग्रहावच्छिन्नेन भेदबुद्धिजो दोषस्तदुपासनाजन्यवक्रुतमहिम्नोदरन्नेनाद्वैतबोधेन समूलं निरस्यते इति ज्ञेयम् ।

### १७१ गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययन्यायः ।

अप्रधाने प्रधाने च कार्ये समुपस्थिते प्रधानमेव कर्त्तव्यमिति भावः ।

अत एव ब्रह्मसूत्रशाङ्करभाष्ये "परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनं गौणमपरम् । मुख्यगौणयोश्च मुख्ये सम्प्रत्ययो भवति" इत्युक्तम् ।

वेदान्तकल्पपरिमले च "ननु सन्दिग्धं वस्तु प्रायदर्शनान्निर्णीयते । गौण-मुख्यग्रहणविशये च मुख्ये सम्प्रत्ययः" इति ।

### १७२ वृद्धकुमारीवाक्यन्यायः ।

एकदा वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्वेति सा वरमवृणोत । पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्रयां भुञ्जीरन्निति । नच तावदस्याः पतिर्भवति, कुतः पुत्राः कुतो गावः कुतो धान्यम् । तत्रानयैकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं संगृहीतम्भवति इति विशेषचातुर्यम् प्रसिद्धकायस्थादिवत् ।

अयमेव वृद्धकुमारीप्रार्थनन्यायः, वृद्धब्राह्मणवरन्यायः इत्यादिरूपैर्व्यवह्रियते ।

इत्यलमतिगाथागानेन ।

इति जौनपुरमण्डलान्तर्गत–बदलापुरोदयपुरगेलहवाभिजन–गर्गकुलप्रसूत–
परिभाषेन्दुशेखरशास्त्रार्थकलाप्रभृतिविंशत्यधिकग्रन्थप्रणेतृ–संस्कृत-
कविचक्रवर्त्तिसुप्रसिद्धशास्त्रार्थिसरयूपारीणशुक्ल पण्डितराज-
श्रीवेणीमाधवशास्त्रिणा सङ्कलिता लौकिक-
न्यायशास्त्रार्थकला समाप्ता ।

---

( १७० ) अत एव महाभाष्ये "अथवा कूपखानकवदेतद् भविष्यति । तद्यथा कूपखानकः कूपं खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति सोऽप्सु जातासु तत एव तं गुणमासादयति येन स च दोषो निर्हण्यते भूयसा चाभ्युदयेन योगो भवत्येवमिहापि" इति ध्वनितम् ।

---

श्रीमते रामानुजाय नमः

# कूटशास्त्रार्थकला प्रारभ्यते ।

ध्यात्वाऽमरवचो दिव्यं सर्वसर्वार्थसाधनम् ।
तनोमि कूटशास्त्रार्थ–कलां सुविदुषाम्मुदे ॥ १ ॥
यद्यप्यनेकशो ग्रन्थाः कूटशास्त्रार्थकारकाः ।
संक्षेपतोऽर्थगतये तथापीयं विरच्यते ॥ २ ॥
काशीप्रयागायोध्याख्यत्रिकोणपरिमध्यगे ।
जमदग्निपुरा ( जौनपुर ) ख्याते मण्डलेऽभिजनो मतः ॥ ३ ॥
बदलापुरोदयपुरगेलहवाग्रामसंज्ञकः ।
सरयूपारीणशुक्लो गर्गवंशसमुद्भवः ॥ ४ ॥
शब्दतर्काद्यलङ्कारः श्रीवेणीमाधवाभिधः ।
काश्यां वसँश्च शास्त्रेषु नाना टीकां करोम्यहम् ॥ ५ ॥
व्युत्पत्तिवादशास्त्रार्थ-कलादीनां समादरः ।
यथा कृतस्तथैवेयं सर्वथाऽऽद्रियतां बुधैः ॥ ६ ॥
यद्यप्यपूर्वं नो सर्वमीक्षितव्यमिहेरितम् ।
तथापि दर्शन्दर्शं सन्तोषमेष्यन्ति सज्जनाः ॥ ७ ॥

श्लोकः

अर्द्धरात्रे दिनस्यार्द्धे अर्द्धचन्द्रेऽर्द्धभास्करे ।
रावणेन हृता सीता कृष्णपक्षे सिताष्टमी ॥ १ ॥

**अर्थः**—कृष्णपक्षे याऽष्टमी तस्य दिनस्यार्द्धे रावणेन सीता हृता किम्भूताष्टमी अर्द्धरात्रे सिता, पुनः कीदृशी अर्द्धचन्द्रे किम्भूते अर्द्धचन्द्रे, अर्द्धम्भा ~ करोति अर्द्धभास्करः तस्मिन् इति ।

शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः ।
रिपुगर्भस्य यो भर्त्ता स मे विष्णुः प्रसीदतु ॥ २ ॥

अर्थः—शम्याऽ कोऽर्थश्शमीवृक्षस्य गर्भो ऽन्तस्सारः तस्य गर्भो ऽग्निः तन्मन्थनेन तज्जननात्, तस्य अग्नेः रिपुर्जलम् तद्गर्भो लक्ष्मीः सागरमथनेन लक्ष्मीजन्मश्रुतेः, तस्या भर्त्ता विष्णुरिति यावत् । अत्र शमीगर्भपदेन अश्वत्थ-वृक्षोऽपि गृह्यते तस्मादप्यग्निजन्म प्रसिद्धमेव ।

विनायकस्तेशशत्रुस्तस्य नाम षडक्षरम् ।
पूर्वार्द्धन्तव राजेन्द्र उत्तरार्द्धन्तु वैरिणाम ॥ ३ ॥

अर्थः—वीनाम्पक्षिणां नायकस्स्वामी गरुडः । तस्य पतिर्विष्णुः तस्ये-त्याशयः ॥ शत्रुः हिरण्यकशिपुः–पूर्वार्द्धम् हिरण्यम्, उत्तरार्द्धम् कशिपुस्तल्पम् तव शत्रवो हि शय्यामाश्रित्य निद्रिता भवन्त्विति फलितार्थः ।

अहञ्च त्वञ्च राजेन्द्र लोकनाथावुभावपि ।
बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ॥ ४ ॥

अर्थः—बहुव्रीहिपक्षे "लोकस्तु भुवने जने" इत्युक्त्या लोका जना नाथा-स्स्वामिनो यस्य एवम्विधस्त्वहम् । सर्वे जनाऽ किञ्चित् किञ्चित् मह्यं सदैव ददति । अहं हि सर्वपूज्यः षष्ठीतत्पुरुषपक्षे लोकानां समेषां जनानां त्वन्नाथ-स्स्वामी पालक इत्याशयः ।

अट्टशूला जनपदाश्शिवशूलाश्चतुष्पथाः ।
प्रमदाऽ केशशूलिन्यो भविष्यन्ति कलौ युगे ॥ ५ ॥

अर्थः—अट्टमन्नं शिवो वेदो ब्राह्मणश्च चतुष्पथः । केशो भग इति प्रोक्तः शूलो विक्रय उच्यते ।

कुन्दकुञ्जमम्ं पश्य सरसीरुहलोचने ।
अमुना कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ॥ ६ ॥

अर्थः—अमुना इत्यस्य मुकाररहितेन मुकुन्दकुञ्जेनेति यावत् ।

स्तनमण्डलमाश्रित्य नभस्य वरयोषिताम् ।
कदा कर्णयते गीतं रमया सह रङ्गराट् ॥ ७ ॥



अर्थः—स्वस्य आकाशस्य मण्डलमाश्रित्य हेकट् हे मेघ मा स्तन गर्जितं मा कुरु यतो रङ्गराट् रङ्गनाथो रमया सह वरयोषितां गीतमाकर्णयत इत्यभिप्रायः ।

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च ।
अहङ्कथं द्वितीया स्याद् द्वितीया स्यामहं कथम् ॥ ८ ॥
विषं भुङ्क्ष्व महाराज स्वजनैः परिवारितः ।
विना केन विना नाभ्यां कृष्णाजिनमकण्टकम् ॥ ९ ॥

अर्थः—विगतः षकारो यस्मात् सविपः । केन विना ककारेण विनेत्यर्थः । विना नाभ्याम्, नाच नाच ना ताभ्याम् नाभ्याम्, द्वाभ्यान्नकाराभ्यामिवनेति, नकारद्वयरहितमित्यर्थः । कृष्णाजिनम् अस्मिन् शब्दे ककारषकारनकाराणां निष्का-सने सति ऋ आजि अम् इत्येवं स्थितिस्तत्र सन्धौ सति राज्यमिति सिद्ध्यति ।

सुवर्णस्य सुवर्णस्य सुवर्णस्य च जानकि ।
प्रेषिता तव रामेण सुवर्णस्य च मुद्रिका ॥ १० ॥

अर्थः—सुवर्णस्य उज्ज्वलवर्णस्य । सुवर्णस्य शोभना वर्णा नामाक्षराणि यत्र तस्य सवर्णस्य अशीतिरक्तिकापरिमितस्य सुवर्णस्य काञ्चनस्येति फलति ।

शङ्करं पतितं दृष्ट्वा पार्वती हर्षनिर्भरा ।
रुरुदुऽ पन्नगास्सर्वे हा हा शंकर शंकर ॥ ११ ॥

अर्थः—शं कल्याणं करोतीति शंकरश्श्रेष्ठचन्दनम् । पार्वती पर्वते भवाः पार्वत्यः स्त्रियः भिल्ल्यः ।

हनूमति हतारामे वानरा हर्षनिर्भराः ।
रुदन्ति राक्षसास्सर्वे हा हा रामहवा हताः ॥ १२ ॥

अर्थः—रावणस्य आरामे उद्याने हनुमता आहते सति दाहिते सतीत्यर्थः ।

विराजराजपुत्रारेर्यन्नाम चतुरक्षरम् ।
पूर्वार्द्धन्तव शत्रूणां परार्द्धन्तव संगरे ॥ १३ ॥

अर्थः—वीनां पक्षिणां राजा विराजो गरुडस्तद्राजा विष्णुः तत्पुत्रो मदनः तदरिश्शिवः तस्य चतुरक्षरन्नाम मृत्युञ्जय इति । तव शत्रूणां मृत्युः, तव संगरे जयः उत्तरार्द्धम् ।

राजन् कमलपत्राक्ष तत्ते भवतु चाक्षयम् ।
आसादयति यद्रूपं करेणुः करणैर्विना ॥ १४ ॥

**अर्थः**—अत्र करेणुः करणैर्विना ककाररेफणकारैर्विना यद्रूपमासादयति प्राप्नोति तत्तेऽक्षयं भवतु ककाररेफणकारव्यञ्जनरहिते सति करेणुशब्दावयव "अ ए उ" इति वर्णा अवशिष्टाः । अ, ए वर्णयोर्वृद्धौ ऐ इति अग्रे उ ऐकारस्य आयादेशे आयुरिति सिद्धम् ।

विजितात्मभवद्वेषि गुरुपादहतो जनः ।
हिमापहामित्रधरै र्व्याप्तं व्योमाभिनन्दति ॥ १५ ॥

**अर्थः**—अमृताहरणसमये विना गरुडेन जितः इन्द्रः तदात्मभवः अर्जुनः तद्द्वेषी कर्णः तद्गुरुः पिता सूर्यः तत्पादहतः तत्किरणसन्तप्तः हिमापहोऽग्निः तदमित्रं पानीयम् तद्धरो मेघः सूर्यकिरणसन्तप्तो जनः मेघाच्छन्नमाकाशमभिनन्दतीति भावः ।

पानीयं पातुमिच्छामि त्वत्तः कमललोचने ।
यदि दास्यसि नेच्छामि ना दास्यसि पिवाम्यहम् ॥ १६ ॥

**अर्थः**—यदि दासी असि नेच्छामि । नो दासी असि तदा पिबाम्यहमिति भावः ।

शिलार्पितपदद्वन्द्वा नासार्पितकरद्वया ।
अभूदव्यक्तस्तनी नारी कथमेतद्भविष्यति ॥ १७ ॥

**अर्थः**—अधस्ताद्दारुणि शिला, नासा दारुरिह्यितम् ।

कान्ते धावय मे पादाविति भर्त्रा निवेदिता ।
न तया धावितौ पादौ भर्त्तुराज्ञा न लङ्घिता ॥ १८ ॥

**अर्थः**—नतया नम्रीभूतया तया स्त्रिया पादौ भर्तुर्धावितौ इति भावः ।

पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः ।
चलते वायुवेगेन पदमेकन्न गच्छति ॥ १९ ॥

**अर्थः**—कुम्भकारचक्रलक्षणम् ।



केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः ।
रुदन्ति कौरवास्सर्वे हा केशव कथं गतः ॥ २० ॥

**अर्थः**—के जले पतितं शवम् मृतम् , द्रोणः कृष्णकाकः "द्रोणः काक इतीरितः" इति कोशः । कौरवाः श्रृगाला इत्यर्थः ।

एको ना विंशतिस्त्रीणां स्नानार्थं सरयूं गता ।
विंशतिःपुनरायाता एको व्याघ्रेण भक्षितः ॥ २१ ॥

**अर्थः**—एको ना इति विंशतेर्विशेषणेन विरोधऽपतति, परन्तु तत्र एकः ना नरः पुरुषः इति तात्पर्ये सति न विरोधः ।

तातेन कथितं पुत्र लेखं लिख ममाज्ञया ।
नतेन लिखितो लेखऽपितुराज्ञा न लोपिता ॥ २२ ॥

**अर्थः**—नतेन नम्रीभूतेनेत्याशयः ।

रामरामेति रामेति रमे रामे मनोरमे ।
सहस्रनाम तत् तुल्यं रामनामवरानने ॥ २३ ॥

**अर्थः**—हे वरानने अहम् रामे अतिरमे । कथम्भूते रामे अतिरामे अतिक्रान्ता रामा येनासौ तस्मिन् , शुद्धे ब्रह्मणि, पुनः कथम्भूते मनोरमे, मनोरमयतीति तस्मिन् । अहं कथम्भूतः रामराः राम एव रा द्रव्यं यस्य सः । यतः कारणान्मे मम सहस्रनामभिस्तुल्यम् रामनाम अत इति ।

किञ्च—अहं रामे अतिरमे, रमु क्रीडायामिति धातुः कथम्भूते रामे वरानने वरमाननं यस्यासौ तस्मिन् । अथवा पार्वत्यास्सम्बोधनं तत् कथम्भूतं रामनाम सहस्रनामतत् सहस्रनाम तनोतीति तनु विस्तारे क्विप्तुकौ । रमन्ते योगिनो यत्र परानन्दे चिदात्मनि । अतो रामपदेनासौ परब्रह्माभिधीयते ॥

वासना वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासीनां वासुदेव नमोऽस्तु ते ॥ २४ ॥

**अर्थः**—वासयतीति वासनस्तत्सम्बुद्धौ हेवासन त्वम् भुवनत्रयम् अव रक्षेति कथम्भूतम्भुवनत्रयम् सर्वभूतनिवासि, सर्वाणि भूतानि निवसन्त्यस्मि-

ज्ञिति, हे असुदेव प्राणेश्वर ईनां कामादीनां वासितं स्य अन्तं कुरु, हे वासुदेव ते तुभ्यं नमः अस्तु ।

यथा नयति कैटासं नगं गानसरस्वती ।
तथा नयति कैलासं न गङ्गा न सरस्वती ॥ २५ ॥

अर्थः—गानसरस्वती यथा कैलासं नगन्नयति तथा न गङ्गा न सरस्वती प्रापयतीति फलति ।

शस्त्रन्खलु कर्त्तव्यमिति पित्रानुयोजितः ।
तदेव शस्त्रं कृतवान् पितुराज्ञा न लङ्घिता ॥ २६ ॥

अर्थः—नखान् लुनातीति नखलु नखच्छेदकं शस्त्रम् ।

कुमारसम्भवं दृष्ट्वा रघुवंशो मनोऽदधत् ।
राक्षसानां कुलश्रेष्ठा रामो राजीवलोचनः ॥ २७ ॥

अर्थः—रघुवंशे कुलश्रेष्ठो रामो राजीवलोचनः राक्षसानां कुं पृथिवीं मारयति पीडयति इति कुमारः पृथ्वीपीडक इति यावत् । तादृशं सम्भवमुद्भवं दृष्ट्वा तत्र तेषान्नाशे मनोऽदधत् निश्चिकायेत्याशयः ।

कहमस्मि गुहा वक्ति प्रश्ने ऽमुष्मिन् किमुत्तरम् ।
कथमुक्तन्न जानासि कदर्थयसि यत्सखि ॥ २८ ॥

अर्थः—कहमित्यत्र कथम् "खघथधभामि"तिकात्यायनसूत्रेण प्राकृते थकारस्थाने हकारः ।

विहगावाहनं येषां त्रिशूलञ्च धरपाणयः ।
पासालसहिता देवास्सदा तिष्ठन्तु ते गृहे ॥ २९ ॥

अर्थः—विः गरुडः हंसः, गोः वृषभः त्रिशूलः कम्बुः चक्रम् पार्वती सावित्री लक्ष्मीः

कोलाकृतिरपारेवो मोरोहंसो जलोदरी ।
कंसारिरात्तलीलो वो नावलोभूकलोऽवतु ॥ ३० ॥

अर्थः—कंसारिः=श्रीकृष्णः, वः=युष्मान् , अवतु=रक्षतु, कथम्भूतः



कंसारिः कोलाकृतिः कोलस्य सूकरस्य रूपं यस्य स पुनः कथम्भूतः अपारेवः अपारे संसारे अवति रक्षति तथा ।

यद्वा अपारे समुद्रे वसतीति सः, क्षीरसमुद्रशायीत्यर्थः । पुनः कथम्भूतः मोरोहंसः मायाः लक्ष्म्याः उरो वक्षः तत्र हंस इव हंसः, पुनः कथम्भूतः जलोदरी जले उदके उदरं गृहं यस्यास्तीति सः, पुनः कथम्भूतः आत्तलीलः आत्ता अङ्गीकृता लीला विलासो येन सः, पुनः कथम्भूतः वावलः वा निश्चयेन अवं लुनातीति सः, पुनः कथम्भूतः भूकलः भुवं कलयति उद्धरतीति सः इति दिक् ।

अच्युतभक्तिवशादिह समभावस्तत्प्रसङ्गेन ।
सारमतेरभ्युदयति रतिरिति नैवाद्भुतं किञ्चित् ॥ ३१ ॥

अर्थः—इह नाम अस्मिन्संसारे अच्युतभक्तिवशात्समभावस्साम्यमित्यर्थः । अर्थात् शत्रुमित्रोदासीनेषु तत्प्रङ्गेन भक्तिप्रसङ्गेन सारमतेः श्रेष्ठबुद्धेः पुरुषस्य रतिः प्रतीतिरभ्युदयति इति न किञ्चिदत्राद्भुतम् । व्याकरणपक्षे तु भो अच्युतभ अच्युता अहीना भा प्रतिभा यस्य, क्विवशात् क्विप्रत्ययवशात् स प्रसिद्धो मभावः मकारस्याभावो लोपो भवतीति योजना । तत्प्रसङ्गेन क्विप्रत्ययप्रसङ्गेन रमतेर्धातोस्सारतिः अभ्युदयतीत्यपि नाद्भुतम् ।

रम धातोः क्विप्रत्यये अनुदात्तोपदेशेति मलोपे रतिरिति रूपं सिद्ध्यति ।

मञ्जुलघौ सम्भावितगुणे क्वचिन्नापदाधारे ।
अयि सखि तत्रोपपतौ मम चेतो नत्वनीदृशे पत्यौ ॥ ३२ ॥

अर्थः—काचित् विदुषी नायिका सखीम्प्रति वदति, अयि सखि तत्र तस्मिन्नुपपतौ मम चेतः अस्तीति शेषः । कीदृशे मञ्जुलघौ मञ्जुः सुन्दरः लघुश्चासौ लघुरिष्टश्च, पुनः कीदृशे सम्भावितगुणे सम्भाविता गुणास्सौन्दर्य्यादयो यत्र, पुनः कीदृशे क्वचित् कदाचिदपि न आपदाधारे आपद्रहित इति भावः । अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति ।

व्याकरणपक्षे-उपपतौ उपपतिशब्दे मम मनोऽस्ति । कीदृशे मञ्जुला घि संज्ञा यस्मिन्, सम्भावितः "घेर्ङिती"ति गुणो यस्मिन् , ना इति पदस्य "आङोनाऽस्त्रियामि"ति विहितस्य आधारे आश्रये अनीदृशघिसंज्ञागुणनादेशरहिते केवले

पतिशब्दे । अयि सखि पतिः सखिवत् शस्तः मित्रवद् विश्वसनीय इति यावत् । इति त्वं किन्न जानासि ? सखी प्रत्याह—

अयि सखि शस्तः सखिवत्पतिरिति किं त्वन्न जानासि ।
शस्तोऽतिसखिवदुपपतिरित्यात्नि कथं त्वया नाबोधि ॥ ३२ ॥

अर्थः—हे आलि उपपतिर्जारः अतिसखिवद् अतिशयितमित्रवद् शस्त इति त्वयापि कथन्नाबोधि ।

व्याकरणपक्षे तु-पतिशब्दः शस्तः शस इति पञ्चम्यन्तात्तसिः, द्वितीया बहुवचनात्परम् सखिवत्सखितुल्यरूपो ज्ञेयः । नादेशाभावेन कार्य्यैक्यात् । उपपतिशब्दः शस्तः द्वितीया बहुवचनात्परम् अतिसखिशब्दवत् नादेशभाक् ।

द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।
तत्पुरुष कर्मधारय येनाहं स्याम्बहुव्रीहिः ॥ ३३ ॥

अर्थः—द्वन्द्वः यतः स्त्रीपुरुषरूपव्यक्तिद्वयात्मकः, द्विगुः द्वौ गावौ यस्यासौ द्विगुः, अव्ययीभावः, भावऽपदार्थमात्रम् न व्ययम् अव्ययम् तदस्त्यस्येति अव्ययी व्ययाभाववानिति यावत । मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थः ।

किञ्च-अव्ययीभवनम् अव्ययीभावः । तस्माद्धे पुरुष येनाहं बहुव्रीहिबहुधान्यविशिष्टस्स्यान्तत्कर्म धारय । समासषट्कप्रतिपादनमत्र वैचित्र्यम् ।

त्वद्विरहमसहमाना निन्दति बाला दिवानिशं शम्भुम ।
राहुमपि रामचन्द्रं रामानुजमपि पन्नगाशनिन ॥ ३४ ॥

अर्थः—मन्मथावशेषणाच्छम्भुम् , चन्द्रावशेषणाद्राहुम् , मलयाद्यवशेषणाद्रामचन्द्रम् , मन्मथजनकत्वाद्बलरामम् , वायुभक्षिसर्पहननात्पन्नगाशनिम् गरुडं निन्दितवतीति भावः ।

रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिक् धिक् ।
अस्मिन् पद्ये याऽपशब्दात्र वेति व्यर्थप्रज्ञं पण्डितं तञ्च धिक् धिक् ॥३५॥

अर्थः—जीविकार्थे चापण्ये इत्यत्र अपण्ये इत्युक्तत्वाद्धस्तिकान्विक्रीणीते इतिवत् रामकं सीतकां लक्ष्मणकम् इत्येवं प्रयोगास्साधवः ।



गोगजवाहनभोजनभक्ष्योद्भूतपमित्रसपत्नज शत्रोः ।
वाहनवैरिकृतासन तुष्टा मामिह पातु जगत्त्रयजुष्टा ॥ ३६ ॥

अर्थः—गवा वृषभेण गच्छतीति गोगः शिवस्तज्जः कार्तिकेयः तस्य वाहनं मयूरस्तस्य भक्ष्यं सर्पस्तस्य भक्ष्यम्वायुस्तज्जः तद्भूतो वा हनुमान् तं पातीति पः तत्पः सुग्रीवः तस्य मित्रं रामः तस्य सपत्नो रावणः तज्ज इन्द्रजित् तस्य शत्रुरिन्द्रः तस्य वाहनमैरावतस्तस्य वैरी सिंहस्तत्रोपविष्टा अत एव सर्वोपरि तुष्टा अम्बिका मामवतु रक्षतु ।

नदीजलङ्केशवनारिकेतु र्नगाह्वयो नाम नगारिसूनुः ।
एषोऽङ्गना वेषधरऽप्रमाथो जित्वा वयं नेष्यति चाद्य गावः ॥ ३७ ॥

अर्थः—भो नदीज गङ्गातनय भीष्म एष दृश्यमानः अङ्गनावेषधरः स्त्रीरूपधारी लङ्केशवनारिकेतुः रावणवनभञ्जकहनूमद्ध्वजः. नगाह्वयो ऽर्जुननामा नगारिसूनुरिन्द्रपुत्रः भो भो कौरवाः अयं प्रमाथी हन्ता अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थः ।

सर्वज्ञस्त्वन् वदसि बहुधा दीयते दीयते वै,
दाधातूनां भवति सदृशं रूपमेषाञ्चतुर्णाम् ।
द्वौ दानार्थौ भवति च तथा पालने खण्डनेऽपि,
नो जानीमऽकथयति भवान्कस्य धातोऽप्रयोगम् ॥ ३९ ॥

अर्थः—दाण् दाने डुदाञ् दाने द्वौ दानार्थौ, एकः पालने देङ् रक्षणे, एकः खण्डने, दो अवखण्डने । एतन्मध्ये कस्य धातोऽप्रयोगम्भवान्वदति कथयति तन्न जानीमः ।

काचिद् बाला रमणवसतिं प्रेषयन्ती करण्डं,
सा तन्मूले सभयमलिखद् व्यालमस्योपरिष्टात् ।
गौरीनाथं पवनतनयं चम्पकं चास्य भावम्,
पृच्छत्यार्य्यान्प्रति कथमिदं मल्लिनाथऽकवीन्द्रः ॥ ४० ॥

अर्थः—रमणवसतिम् प्रियनिवासम् करण्डस्थितपुष्पसौरभं गन्धवाहो हरेदिति । तद्भक्षकं सर्पम् पुष्पबाणो बाणार्थं हरेदिति । तद्वैरिणं शिवम् सूर्यः

पुष्पं स्वकरैः शोषयेदिति । जन्मकाल एव भक्ष्यबुद्धया हर्तुं प्रवृत्तस्य भयजननाय हनूमन्तम् तन्मकरन्दं भृङ्गो हरेदिति चम्पकमलिखदिति भावः । चम्पके भृङ्गा न गच्छन्तीति प्रसिद्धिः ।

नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूतैᳵक्रियते भरेण ।
कण्ठे कुठारः कमठे ठकारः शेषे ढकारस्तपने चकारः ॥ ४१ ॥

नृसिंहदेवे सेनाभरेण सह यात्रार्थं चलति प्रत्यर्थिभूतैः शत्रुभूपतिभिः सेनाभिस्सह पलायमानैः भरेण साध्वसाधिक्येन कण्ठे कुठारᳵक्रियते । कुठारघाततुल्या पीडानुभूयते । तथाच भरेण सेनासमूहगुरुत्वेन कमठे ठकारᳵक्रियते । भूधरधरः कूर्मावतारोऽङ्गसम्मर्दभीत्या पाणिपादमुखमन्तस्संकोच्य ठकारतुल्योऽभूत् । तथा केवलं मण्डलाकृतिस्तस्थौ । तथा शेषोऽपि एकस्मिन्नेव भुवᳵप्रदेशेऽधिकभरेण ढकारतुल्यो वक्रीकृतग्रीवकुण्डलिकोऽभूत् तपने सूर्ये च चकारस्समुच्चयᳵक्रियते । अतिभीत्या तेषां शत्रूणां शतसूर्य्यन्नभस्तलं पश्यत इत्यर्थः ।

कान्ता रुचिम्मुनिजनस्तरुणो वियोगी कामश्च रत्नमणिरुज्ज्वलकङ्कणेन ।
धत्ते पयोधरयुगे कुचभूषणेन हारे हरे हिमकरे मकरे करे च ॥ ४२ ॥

अर्थः—कान्ता हारे रुचिन्धत्ते । मुनिजनो हरे रुचिन्धत्ते । अवियोगी तरुणो हिमकरे रुचिन्धत्ते । कामो मकरे निजचिह्नभूते रुचिन्धत्ते । रत्नमणिः उज्ज्वलकङ्कणेन सह करे कुचभूषणेन सह पयोधरयुगे च रुचिन्धत्ते इति ।

## कृष्णवासुदेवादिशब्दव्याख्या वितायते ।

### केशवः

कश्च ईशश्च केशौ तौ वर्त्तयतीति केशवः । औणादिको डप्रत्ययः टिलोपश्च । किञ्च को ब्रह्मा ईशो महारुद्रस्तौ प्रेरयतीति केशवः । औणादिकाच्प्रत्ययनिपातनेन वर्णव्यत्ययेन रूपसिद्धिः । अतएव हरिवंशे "को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गसम्भूतावतᳵकेशवनामवानि "त्युक्तिस्सङ्गच्छते । किञ्च प्रशस्ता उत्तमाᳵकेशास्सन्त्यस्येति वा विग्रहः "केशाद्वोऽन्यतरस्यामि"ति प्रत्ययः । किञ्च केशाभ्यां शुक्लकृष्णकेशाभ्यामवताररूपेण वर्त्तत इति विग्रहे वृतधातोर्डप्रत्यये टिलोपे केशव इति ।



### नारायणः

अरा दोषास्तद्विरुद्धा गुणा नारास्तेषामयनमितिदोषविरुद्धगुणाश्रयत्वान्नारायण इति । किञ्च नारे जले अयनं स्थानं यस्येति वा विग्रहः । "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताᳶपूर्वं तेन नारायणस्स्मृत"इति शिष्टोक्तिः । किञ्च नराणामिदंनारम् नारमयतेऽनेनेति नराणां जन्मादीनि येनेति वा विभागः । किञ्च नारा मुक्तास्तदाश्रयत्वाद्वा नारायण इति ।

### माधवः

मा लक्ष्मीस्तस्या धवᳶपतिर्माधवः । किञ्च मधुरापत्तनेऽवतीर्णत्वात् माधवः । किञ्च मधुविद्याविषयत्वात् माधवः । किञ्च मधौ मधुकूले जातो माधवः । किञ्च मा लक्ष्मीस्तां धुनोति कम्पयतीति माधवः ।

### गोविन्दः

गाम् पृथ्वीमविन्दत्समुद्रमग्नां पृथ्वीम् प्राप्तत्वाद्वा गोविन्दः । किञ्च गाम्वाणीमविन्दत इति गोविन्दः । किञ्च गोभिर्वेदवाणीभिरिन्द्रादिभिर्विन्दते स्तोत्रितो भवतीति गोविन्दः । किञ्च गोभिर्वेदैर्वेद्य इति गोविन्दः । वेदेन प्रतिपाद्यत्वाद् गोविन्दः । तदुक्तम्—

नष्टाम्वै धरणीं पूर्वमविन्दद्विप्रहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥
गौरेषा तु यथा वाणी तां तु विन्दयते भवान् ।
गोविन्दस्तु ततो देवो मुनिभिᳵकथ्यते भवान् ॥
अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥
गोभिरेव यतो वेद्यो गोविन्दस्स उदाहृतः ।

### विष्णुः

विष्लृ व्याप्तौ वेवेष्टीति सर्वजगद्व्याप्तत्वाद् विष्णुः । विशिष्टबलचेष्टस्वभावत्वाद्वा विष्णुः । विश प्रवेशने विशन्ति जना अस्मिन्निति विष्णुः प्रलयादौ स एवाधार इत्यपि—अत्र तापनीयश्रुतिः "यस्मात्स्वमहिम्नः सर्वान् लोकान् सर्वान्

देवान् सर्वानात्मनः सर्वाणिभूतानि व्याप्नोति व्यापयतीति । णकारो बलं षकार॒ प्राण आत्मा ।

## मधुसूदनः

मधुं सूदयति "दैत्यो मधुः" इति मधुसूदनः । त्रिविक्रमः त्रिविध॒क्रमः पादविक्षेपो यस्येति । "इदम् विष्णुर्विचक्रमे" इति श्रुतिः । त्रिषु लोकेषु विक्रमो यस्येति वा । त्रीन्वेदानतिक्रामति तद्गोचरो भवतीति । त्रिषु लोकेषु विना-पक्षिणा गरुडेन क्रामतीति त्रिविक्रमः ।

## वामनः

वामं सौन्दर्य्यं नयतीति वामनः । किञ्च वामैर्मङ्गलरूपै र्वेदादिभिर्नीयते गीयत इति वामनः । लक्ष्मीं वामेन वामभागेन नयति धरतीति वामनः ।

## हृषीकेशः

हृषीकाणामिन्द्रियाणामीशः हृषीकेशः । पद्मनाभः पद्मन्नाभौ यस्यासौ पद्मनाभः । श्रीधरः श्रियं धरतीति श्रीधरः लक्ष्मीधर इत्याशयः ।

## दामोदरः

दाम उदरे यस्यासौ दामोदरः मात्रा दाम्ना उदरे बद्धत्वादित्यर्थः ।

## सङ्कर्षणः

सम्यक् पापानि दुःखानि कर्षतीति सङ्कर्षणः । सम्यक् पापनिर्मूलनकर्तृ-त्वादित्यर्थः ।

## वासुदेवः

वसन्ति भूतानि यस्मिन्निति वासुः, दीव्यतीति देवः, वासुश्चासौ देव इति वासुदेवः, सकलाधारकः ।

किञ्च वश्चासौ असुश्च वासुस्सचाऽसौ देवश्च वासुदेवः । वः बलरूपः असुः प्राणरूपः, सर्वचेष्टत्वाद्देवः क्रीडादिगुणयुक्तः, सकलबलचेष्टकत्वात् क्रीडादिगुणविशि-ष्टत्वाद् वासुदेवः । "पुंसि भूम्न्यसव॒प्राणाः" इति कोशात् असुशब्दो यद्यपि बहुवचनान्तस्तथापि संज्ञावाचकत्वात् परमेश्वररूपकत्वादेकवचनम् ।



## प्रद्युम्नः

प्रकृष्टं द्युम्नं प्रकाशो यस्येति, प्रकर्षेण द्योतयतीति वा, प्रकृष्टं द्युम्नं द्रव्यं यस्येति वा प्रद्युम्नः प्रकृष्टद्रव्यप्रद इत्यर्थः ।

## अनिरुद्धः

न निरुध्यतेऽसावनिरुद्धः, परनिर्बन्धशून्य इत्यर्थः । अनो मुख्यप्राणः सेव्य-तया रुध्यते ऽसावनिरुद्धः । अनिनो मुख्यप्राणदासाः तैस्सेव्यतया स्वहृदि रुध्यत इति वा । अनिभिर्भक्तै रुध्यत इति अनिरुद्धः ।

## पुरुषोत्तमः

पुरुषाभ्यां क्षराक्षराभ्यामुत्तमः पुरुषोत्तमः । "ब्रह्मा शिवस्सुरेन्द्राद्याः शरी-रक्षरणात्क्षराः । लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः" ।

किञ्च "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव इत्येते षड्गुणास्स्मृता" इति प्रमाणेन पूर्णा गुणाः षड् यस्येति पुरुषः । सचासा-वुत्तमश्चेति पुरुषोत्तमः ।

किञ्च पुरुषु जीवेषु शेते व्यापकत्वात् पुरुषः । सचासावुत्तमश्चेति । किञ्च पुरि लिङ्गे शेते इति पुरुषः ।

## अधोक्षजः

अधःकृतानि अक्षजानि येनेत्यधोक्षजः । अतीन्द्रिय इति निष्कर्षः ।

## नरसिंहः

नरश्चासौ सिंहश्चेति विग्रहः । किञ्च अन्येन न रीयते न क्षीयते इति नरो हिर-ण्यकशिपुः तं हिनस्तीति नरसिंहः । पृषोदरादित्वात् ।

## अच्युतः

च्युङ् च्यवने, न च्यवते इत्यच्युतः, कर्त्तरि क्तः, स्वपदच्यवनाभाव इत्यर्थः ।

## जनार्दनः

जनान् बल्यादीनर्दयतीति जनार्दनः, याचते इति फलितार्थः । अर्दगतौ याचने चेतिधातुः, सुजनैः पुरुषार्थं याच्यत इति वा । दुष्टजनं र्दयति पेषयतीति वा । अ-

नानूसर्वजनानर्दयति प्रलये नाशयतीति वा । अत्र सरयूपारीणशुक्लाः, जनानां जन्ममरणादीन्यर्दयति नाशयतीति जनार्दन इति सिद्धान्तः । हरिः, भक्तपापं हरतीति हरिः, दैत्यशिरांसि हरतीति वा, भक्तचित्तं हरतीति वा । कृष्णः, आनन्दपूर्णत्वात्कृष्णः । "कृषिर्भूवाचकशब्दो णश्च निर्वृत्तिवाचकः । तयोरैक्यं परं ब्रह्म कृष्णइत्यभिधीयते" कंसादीन्कर्षतीति कृष्णः "यतः कर्षसि देवेश नियम्य सकलं जगत् । अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः" इति कूर्मपुराणम् ।

दशरथः

वेदानामप्यर्थान्तरे तात्पर्यमित्यहुसारसोमते । किम्बहुना पौरुषेयवाक्ये । तथा दशरथो नाम वेदः दश पुराणन्यायमीमांसाधर्मशास्त्राङ्गलक्षणा रथाः प्रचारोपाया यस्येति व्युत्पत्तिः । कर्मकाण्डोपासनाकाण्डब्रह्मकाण्डात्मकस्य तस्य वर्णाश्रमनियन्तृत्वेऽपि न राजपदवाच्यत्वमितिनिष्कर्षः । तस्य दशरथाख्यवेदस्य तिस्रश्शक्तयः । कौशल्यापदवाच्यैका शक्तिः, केकयीपदवाच्या द्वितीया शक्तिः, सुमित्रापदवाच्या तृतीया शक्तिः ।

कोशलाख्यदेशे प्रायशो ब्रह्मनिष्ठा लोकाः । एवञ्च तस्मिन्देशे ब्रह्मप्रतिपादनशक्तेरभिव्यक्तत्वात्कौशल्येति व्यपदिश्यते । केकयेषु प्रायशः कर्मठा एव लोकाः कर्मप्रतिपादनशक्तेस्तत्राविर्भूतत्वात्केकयीति व्यपदेशः । मगधेषु उपासनाशक्तेरभिव्यक्तेर्मागधीति व्यपदेशः । सा च कर्मब्रह्मानुकूलार्थप्रतिपादकत्वात्सुमित्रेत्यपि व्यपदिश्यते । ततश्च शक्तयस्तदेकाधीनत्वात्तत्पत्नीत्वेन कल्पिताः ।

एवञ्च तात्पर्यालोचनात्मकपुत्रेष्टिनिरूपिताभिव्यक्त्युपायेनैतेन मायाशक्त्या श्रीरामादयश्चत्वारोऽपि इह प्रथमतः प्रतीतिविषयत्वसाम्येनोत्पन्ना इति कल्पिताः । तत्र ब्रह्मकाण्डात्मकेन कौशल्याशब्दवाच्यया शक्त्याऽखण्डदण्डायमानस्वप्रकाशनिरञ्जनचैतन्यनिष्ठया मायया तत्स्वप्रकाशतामावृत्य तदाकारेण परिणमन्त्या कृतावच्छेदजगन्नियन्तृसर्वशक्तिमद् जगदीश्वरशब्दव्यपदेश्यं श्रीरामाख्यं ब्रह्म प्रकाशितम् । तदेव महर्षिसंतमित्यालोच्य भगवता सूत्रकृतोक्तम् शास्त्रयोनित्वादिति । शास्त्रं योनिः कारणं यस्येति । तेन युज्यत एव ब्रह्मणि तत्वोपचारः । ततः कर्मकाण्डात्मकेन वेदेन कैकेयीशब्दवाच्यया शक्त्या तैजसात्मकं भरतशब्दवाच्यं चैतन्यरूपं प्रकाशितम् । तत उपासनाकाण्डात्मकेन वेदेन सुमित्राशब्द-



व्यपदेश्यया स्वर्गापवर्गोपायभूतोपासनाप्रकटनेन चैतन्यावस्थाद्वयं प्रकटितम् । विश्वभवनात्मा वस्तुमात्रं ब्रह्मरूपं संसारदशायामेव पश्यति तल्लक्ष्मणशब्दवाच्यम् । चैतन्यं ब्रह्मशब्दप्रकाश्यश्रीरामावगत्यनुकूलमिति तत्सहचरितमिति गीयते ।

यस्तु प्राचीनकर्मसंस्कारवशात्कामानेव चिन्तयति तच्चैतन्यं शत्रुघ्नपदाभिधेयम् । तैजसात्मकभरतानुकूलमिति प्राज्ञात्मकं तत्सहचरितं गीयते । तथाच सुमित्रायाः पुत्रद्वयम् एकः श्रीरामानुयायी, इतरः भरतानुकूल इति प्रसिद्धिः ।

सीता तु मायैव अनादिसिद्धैव । अत एवास्यास्योनिजत्वप्रसिद्धिः । जनकपालिता च भवत्येव जनकस्तादृशं पालनं करिष्यति । सा विशुद्धेन चैतन्येन जीवब्रह्मभावानापन्नेव पालितैव, तदाधारत्वात् । भवति च चैतन्यं जनकं सर्वजनकमायासंग्रहकर्तृत्वात् । घटजनकमृत्पिण्डसंग्रहवान् कुलालोऽपि जनकत्वव्यपदेशं लभते तद्वदिति ।

अकाराक्षरसम्भूतो रामो विग्रहवान्सुधीः ।

इकाराक्षरसम्भूतस्सौमित्रिर्विश्वभावन इत्यादि । इत्यादीश्वरनामार्थनिरूपणं प्रचारावेत्यलम् ।

## क्रियागुप्तम् ।

ललाट तिलकोपेतः कृष्णः कमललोचनः ।
गोकुलेऽत्र क्रियाम्वक्तुम्मर्यादा दशवार्षिकी ॥ १ ॥

उत्तरम्—लट् वाल्ये इति धातुः परोक्षे लिट् ललाटेति क्रियापदम् ।

चम्पा सरसि रामेण सस्नेहं सविलासया ।
सीतया किंकृतं सार्द्धमत्रैवोत्तरमोद्यताम् ॥ २ ॥

उत्तरम्—ष्णा शौचे इति धातुः सस्ने इति कर्मणि लिट् ।

कान्तया कान्तसंयोगे किमकारि नवोढया ।
अत्रापि चोत्तरंवक्तुमवधिर्ब्रह्मणो वयः ॥ ३ ॥

उत्तरम—अत्रापि इति त्रपूष् लज्जायाम् कर्मणि लुङ् ।

दामोदराय पुण्यात्मन् पुष्पमूलफलान्यपि ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ४ ॥

उत्तरम्—हे दामोदर पुष्पमूलफलानि आय आनय, इदकिट कटौ प्रक्षिप्तस्य ई धातोराङ्पूर्वस्य लोटो रूपम् । उपसर्गविशिष्टत्वादानयनार्थकत्वम् ।

कान्तम्विना नदीतीरं मदमालोक्य केकिनी ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ५ ॥

उत्तरम्—केकिनी मयूरी इरम्मदं मेघज्योतिः विद्युतमिति यावत् । आलोक्य विना नदीति विशेषेण पुनः पुनर्वाशब्दं करोतीत्यर्थः ।

अम्लानपङ्कजा माला कण्ठे रामस्य सीतया ।
मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेऽपि क्रिया पदे ॥ ६ ॥

उत्तरम्—प्रत्यक्षेऽपि क्षिप्ता ।

नरसिंहाकृतिम्वीक्ष्य वने मत्तमतङ्गजः ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ७ ॥

उत्तरम्—गजः सिंहस्याकृतिम्वीक्ष्य न आर न जगाम ऋ गतौ कर्तरि लिट् ।

सन्ध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ८ ॥

उत्तरम्—हे द्विजोत्तम ऐः आगच्छ, इण् गतौ ।

कर्त्तृगुप्तम् ।

श्यामौतवस्तनावेतौ पिबन्ति सततं मुदा ।
अत्र कर्त्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ ९ ॥

उत्तरम्—श्यामौतवः कृष्णमार्जाराः कर्त्तारः ।

गौरीनखरसादृश्यश्रद्धया शशिनन्दधौ ।
इहैव गोप्यते कर्त्ता वर्षेणापि न लभ्यते ॥ १० ॥

उत्तरः—इ ऽ कामस्तं हन्तीति इहा ईश्वर इत्यर्थः ।

व्यामोहं तव भिन्दन्तु छिन्दन्तु दुरितानि च ।
कर्त्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः ॥ ११ ॥



उत्तरम्—उः महादेवः, इः ब्रह्मा, अः विष्णुः त्रिभिरक्षरैर्व्यं इति जातम् । तस्य बहुवचने सम्बुद्धौ व्या इति हरविधिहरय इति यावत् ।

कर्म्मगुप्तम् ।

एहि हेरमणि पश्य कौतुकं धूलिधूसरतनुंदिगम्बरम् ।
सापि तद्वदनपङ्कजं पपौ भ्रातरुक्तमपि किन्न बुध्यसे ॥ १२ ॥

उत्तरम्—हेरमणि एहि कौ पृथिव्याम् तुकं बालकं धूलिधूसरतनुन् दिगम्बरम्पश्य इति ।

भवानिशं करोमेशं प्रति पूजापरायणः ।
कर्त्तृकर्मक्रियागुप्तं यो जानाति स पण्डितः ॥ १३ ॥

उत्तरम्—हे कर उमेशम्प्रति अनिशं पूजापरायणो भव इति ।

करणगुप्तम् ।

अहम्महानसायातः कल्पितो नरकस्तव ।
मया मांसा[illegible] भुक्तं भीमं जानीहि मां बक ॥ १४ ॥

उत्तरम्—महच्च तत् अनः शकटञ्च महानः तेन महानसा महता शकटेन आयातः आगतः नरको मृत्युः ।

सम्प्रदानगुप्तम् ।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ।
ददाति भक्तिसम्पन्ना पुत्रसौभाग्यकाम्यया ॥ १५ ॥
प्रशास्त्यायुक्तमार्गस्य तव सम्मानितां श्रिताः ।
स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥ १६ ॥

उत्तरम्—अम्भोरुहमये इत्यत्र, अये इति च्छेदः हः कामस्तस्मै प्रशास्त्यायुक्तमार्गस्येत्यत्र प्रशास्त्यै कल्याणाय उक्तमार्गस्य ।

सरसी तोयमुद्धृत्य जनःकन्दर्पकारकम् ।
पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ १७ ॥

उत्तरम्—सरसीतः सरोवरात् कञ्जलम् ।

भानुर्वै जायते लक्ष्म्या सरस्वत्याथवा मता ।
अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी ॥ १८ ॥
प्रासन्दो मधुमासः प्रबला रुक्प्रियतमोऽपि दूरस्थः ।
असतीसन्निहितेयं संहृतशीला सखीनियतम् ॥ १९ ॥

उत्तरम्—भानुर्वै इत्यत्र भाः कान्तिः, नुःकोऽर्यौ नरस्य नृशब्दात्षष्ठिप्रत्यये । मधुमास इत्यत्र मासः चन्द्रस्य, अतो मधु मद्यं प्रासम् । मास्शब्दो हलन्त इति ।

अधिकरणगुप्तम् ।

या कटाक्षच्छटापातैः पवित्रयति मानवम् ।
एकान्ते रोपितप्रीतिरास्ते सा कमलालया ॥ २० ॥
विपद्यमानता सिद्धा सर्वस्यैव निरुष्मणः ।
यथात्र भस्मरक्षायाश्च निर्वाणं हन्त्ययञ्जनः ॥ २१ ॥

उत्तरम्—ए=कृष्णे, कान्ते=भर्तरि, अशब्दस्य सप्तम्येकवचने "ए" इति रूपम् । विपद्यमानता इत्य॰ विपदि कष्टेनिर्गत ऊष्मा द्रव्यरूपो यस्मात् तस्य निरूष्मणः अमानता आदराभावः शान्तमूष्मरहितमित्यर्थः ।

सन्धिगुप्तम् ।

नमयागोरसाभिज्ञं चेतःकस्मात् प्रकुप्यसि ।
अस्थानरुदितैरेतैरलमालोहितेक्षणे ॥ २२ ॥

उत्तरम्—न निषेधः, मे=मम, आगोरसाभिज्ञमिति च्छेदः । मे चेतः आगोरसाभिज्ञम् अपराधरसाभिज्ञम् नेत्यर्थः ।

समासगुप्तम् ।

विषादी भैदयमश्नाति सदारोगान्न मुञ्चति ।
रुष्टेनापि त्वया वीर शम्भुनारिस्समःऽकृतः ॥ २३ ॥
नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।
मण्डलाग्रेगदाशङ्खं चक्रं जयति बिभ्रती ॥ २४ ॥



उत्तरम्—विषादी अत्र खिन्नः, अथवा विषम्=कालकूटमत्तीति सः विषादी तत्पुरुषसमासः । सदा=सर्वदा, रोगान्न मुञ्चति । किञ्च दारैस्सह वर्त्तमानस्सदारः=सस्त्रीकः, अगान्=शैलान्न मुञ्चति तत्पुरुषसमासः ।

नित्यंदेवैः आराधिता अथवा नित्यं सा लक्ष्मीर्यस्याः सा नित्यमा देवैराधिता बहुव्रीहिसमासः ।

अन्तरालापः ।

कः कौ केकं कौ कान् हसति च हसतो हसन्ति हरिणाक्ष्याः ।
अधरःपल्लवमक्ष्णा हंसौ कुन्दस्य कोरकान्दन्ताः ॥ २५ ॥

अर्थः—हरिणाक्ष्याः कौ कं हसति, अधरःपल्लवम् , को कौ हसतः, अक्ष्णीहंसौ, कें कान्हसन्ति दन्ताःकुन्दस्य कोरकान् ।

केभूषयन्ति स्तनमण्डलानि कीदृश्यमा चन्द्रमसःकुतः श्रीः ।
किमाह सीता दशकण्ठनीता हारामहादेवरतात मातः ॥ २६ ॥

अर्थः—हाराः=महादेवरता, तमातः=रात्रितः, हाराम हादेवर हा तात हा मातः ।

बहिरालापः ।

किमिच्छति नरःकाश्यां भूपानां को रणे हितः ।
को वन्द्यस्सर्वदेवानां दीयतामेकमुत्तरम् ॥ २७ ॥

उत्तरम्—मृत्युञ्जयः ।

धीरः कीदृग्वचो ब्रूते को रोगी कश्च नास्तिकः ।
कीदृक् चन्द्रन्न पश्यन्ति तत्सूत्रम्पाणिनेर्वद ॥ २८ ॥

उत्तरम्—अर्थवदधातुरप्रत्ययःप्रातिपदिकम् ।

राजसम्बोधनं किंस्यात्तुमीवस्य तु का प्रिया ।
अधनास्तुकिमिच्छन्तिआर्त्तैः किं क्रियते वद ॥ २९ ॥

अर्थः—देवताराधनम् । देव-तारा-धनम् , राधनम् ।

प्रश्नोत्तराणि ।

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।

इदमपि न कृतन्नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥ ३० ॥

**उत्तरम्**—पूर्वार्द्धेनाक्षेपः । उत्तरार्धेनोत्तरम् ।

भूरिभारभराक्रान्तो बाधति स्कन्ध एष ते ।
न तथा बाधते स्कन्धो यथा बाधति बाधते ॥ ३१ ॥

**उत्तरम्**—पूर्वार्द्धेन प्रश्नः । धातोरात्मनेपदित्वेनोत्तरार्द्धेनोत्तरम् ।

क्रियन्मात्रं जलं विप्र जानुदघ्नं नराधिप
तथापीयमवस्थाते नहि सर्वे भवादृशाः ॥ ३२ ॥

**चित्रम्**

नमामि मामनोनुन्नमानं मुनिममानिनम् ।
नानानमनमानाम मोन्नामानमुमेन मुम् ॥ ३३ ॥
तारतारतरैरेतैरुत्तरोत्तरतोरुतैः ।
रतार्त्ता तित्तिरी रौति तीरे तीरे तरौ तरौ ॥ ३४ ॥

**अर्थः**—त्र्यक्षरं पद्यन्नमामि नमस्करोमि । कम् = उम्, विष्णुम् । न केवलं तमेव अपि तु उमेनं पार्वतीपतिमपि हरिहरमित्यर्थः । किम्भूतम् मामनोनुन्नमानम् = मा लक्ष्मीस्तस्या मनसः नुन्नः अपहृतो मानो येन स तथा तं, लक्ष्मीचाञ्चल्यगर्वापहारिणम् । पुनः कीदृशम् मुनिम् = योगीश्वरम्, अमानिनम् = मानरहितम् । पुनः कीदृशम् नानाननम् नानाविधानि आननानि मुखानि यस्यासौ दशावतारत्वादनेकमुखम् । पुनःकीदृशम् अमानामम् = अमानम् आकाशम् अमति अतिक्रामतीत्यमानामस्तम् । पुनः कीदृशम् ओन्नामानम् = ब्रह्मस्वरूपम् । एवम्विधमुमेनम् हरम् उम्विष्णुञ्च नमामि । उ इति सम्बोधनम् ।

रसासाररसासार सायताक्षक्षतायसा ।
सातावाततवातासा रक्षतस्त्वस्त्वतक्षर ॥ ३५ ॥

**अर्थः**—सर्वतोभद्र हे सार उत्कृष्ट तव रक्षतः पालयतः सतः सारसा पृथ्वी सारसा उत्कृष्टरसास्तु भवतु । हे आयताक्ष = दीर्घलोचन तथा सा क्षतायसा चास्तु क्षतः नाशितः आयः अर्थागमो यैस्ते क्षतायाश्चौरादयः तान्स्यति अन्तकर्यति इति कृत्वा तथा सातं सुखमवतीति सातावा श्रेयस्करीत्यर्थः । अस्त्विति सर्वत्र योज्यम् ।

हे अत ! अतति नित्यमेवोद्यमं भजत इत्यर्थः । तथा अतासा अक्षया रसाः भवत्वित्यत्रापि योगः । तुर्नियमे रक्षत एव नत्ववलिप्तस्य, तथा हे अतक्षर तत्क्षणम् तक्षस्तनूकरणम् तं राति ददातीति तक्षरः न तक्षरः अतक्षरः पुष्टिद इति यावत् ।

सार मान वरारोहा नगेभा गमना ह्रिया ।
या हि नामग भागेन हारो रावण मा रसा ॥ ३६ ॥ इत्यादि ।

**आशीर्वादात्मकश्लोकाः ।**

चरीकर्त्तु भव्यं सदा ते रमेशो गणेशो जरीहर्त्तु विघ्नन्त्वदीयम् ।
नरीनर्त्तु वाणी सदा ते मुखाब्जे दरीदर्त्तु ते शत्रुवर्गान्महेशः ॥१॥
सुरासुरासेवितपादपङ्कजा करे विराजत्कमनीयपुस्तका ।
विधेश्च पत्नी कमलासनप्रिया सरस्वती नृत्यतु वाचि ते सदा ॥
गिरीशपत्रो नगजार्तिहारी कुमार तातश्शशिखण्डमौलिः ।
लङ्केशसम्पूजितपादपद्मः पायादनादिः परमेश्वरोवः ॥२॥ इति ।

## अथ बुद्धिविवर्द्धनाय प्रहेलिका प्रारभ्यते ।

वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्षएव च ।
अकारादि सकारान्तं यो जानाति स पण्डितः ॥ १ ॥

**उत्तरम्**—अननस इति लोकप्रसिद्धिः ।

चतुर्मुखो नच ब्रह्मा वृषारूढो न शङ्करः ।
निर्जीवी च निराहारी अजस्रं धान्यभक्षणम् ॥ २ ॥

**उत्तरम्**—वृषभस्थो गोण इति प्रसिद्धिः ।

श्यामानना न मार्जारी द्विजिह्वा नच सर्पिणी ।
पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः ॥ ३ ॥

**उत्तरम्**—लेखनी, यत्र सर्वम्विशेषणं सङ्घटते पञ्चभर्त्री कुचुटुतपु इत्याद्यनुसृता ।

अपूर्वोऽयम्मया दृष्टः कान्त कमललोचने ।
शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः ॥ ४ ॥

उत्तरम्—अशोकवृक्षो लोकानुगतः ।

पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः ।
चलते वायुवेगेन पदमेकन्न गच्छति ॥ ५ ॥

उत्तरम्—घटादिनिर्माणार्थं कुम्भकारचक्रम् ।

अर्द्धचन्द्रसमायुक्तं पुन्नाम चतुरक्षरम् ।
ककारादिलकारान्तमिह जानाति पण्डितः ॥ ६ ॥

उत्तरम्—करतालो वाद्यविशेषः । अथवा करवालश्शस्त्रविशेषः ।

अनुनेतुं मानिन्या दयितश्चरणे सराग[illegible]याः ।
यावत्पतितस्स तया तत्क्षणम[illegible]कस्मात् ॥ ७ ॥

उत्तरम्—रजस्वलासमयात् ।

गीत्वा किमपि व्याधः शृङ्गं [illegible]ग्राह तरुणहरिणस्य ।
तमथ समीक्ष्योद्यतकरमेणीमपि लज्जिता व्याघ्री ॥ ८ ॥

उत्तरम्—इति चिन्तितं तया यतो येन कर्णेन गीतं श्रुतं तस्य दातुः कर्णस्य पुरो याच्ञायै करो न प्रसारितो व्याधेन नीरसकठिनकुटिलस्य शृङ्गस्य तु पुरः प्रसारित इत्यनुचितं कृतं मूढेन ।

कृतेऽप्यनौचित्ये स्वयं मृगयूथपतिः गीतरसशोऽकृतपात्रविचारः स्वभावकृपणं याचकं जानन्निजशिरोदानाय उद्यतकरो जातः । अतो व्याघ्री तं हरिणं चतुरं ज्ञात्वा तं च व्याधं मूर्खं ज्ञात्वा एणीछ दुराहरचतुरपतिपत्नीत्वेन सुभगां सम्भाव्य लज्जितेति भावः । अन्येऽपि भावास्सम्भवन्ति ।

काचिन्मृगाक्षी प्रियविप्रयोगे निशीथिनी पारमपारयन्ती ।
आगातुमादाय करेण वीणामुद्ग्रीवमालोक्य शनैरहासीत् ॥ ९ ॥

अर्थः—यतोऽयं गीतप्रियो मृगाङ्के मृगो महत् प्रयुक्तं गीतमाकर्णयितुं चन्द्राच्चेदवतरेत्तदा चन्द्रो निष्कलङ्कस्स्यात् तेन मन्मुखसाम्यं च लभेत प्रियविप्रयोगे च



सन्तापकरो मे हिमांशुः, अतोऽस्य शशोश्चन्द्रमसो मन्मुखसाम्यंमाभूत् इत्याशयेन वीणामहार्षीदिति ।

सदारिमध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव नित्यम् ।
यथार्थवादिन्यपि नैव दूती का नाम कान्तेति निवेदयाशु ॥ १० ॥

उत्तरम्—सारिका ।

वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी नच शूलपाणिः ।
त्वग्वस्त्रधारी नच सिद्धयोगी जलञ्च बिभ्रन्न घटो न मेघः ॥ ११ ॥

उत्तरम्—नारिकेलफलम् ।

वृक्षाग्रवासी नच पक्षिजातिस्तृणंच शय्या नच राजयोगी ।
सुवर्णकायो नच हेमधातुः पुंसश्च नाम्ना न च राजपुत्रः ॥ १२ ॥

उत्तरम्—आम्रः ।

चक्री त्रिशूली न हरिर्न शम्भुर्महान्बलिष्ठो नच भीमसेनः ।
स्वच्छन्दचारी नृपतिर्न योगी सीतावियोगी नच रामचन्द्रः ॥ १३ ॥

उत्तरम्—वृषभः लोके सांड़ इति ख्यातः ।

आद्येन हीनं जलधावदृश्यं मध्येन हीनं भुवि वर्णनीयम् ।
अन्तेन हीनं ध्वनते शरीरं हेमाभिधस्स श्रियमातनोतु ॥ १४ ॥

उत्तरम्—करजः ।

सर्वस्वापहरो न दस्युकुलजः खट्वाङ्गभृन्नेश्वरो,
दोषानिष्टकरो न धर्मनिरतः कालालपो नासुरः ।
नृणां पृष्ठपलाशना न पिशुनः शीघ्रंगमो नो हयः,
शश्वद्रात्रिचरो न राक्षसगणः कोऽयं सखि ब्रूहि मे ॥ १५ ॥

उत्तरम्—मत्कुणः ।

सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनः,
सर्पो नैव विलेशयोऽखिलनिशाचारी न भूतोऽपि च ।

अन्तर्द्धानपटुर्नसिद्धपुरुषो नाप्याशुगो मारुत,
स्तीक्ष्णास्यो नतु सायकस्तमिह ये जानन्ति ते पण्डिताः ॥

उत्तरम्—करज एव

जाता शुद्धकुले जघान पितरं हत्वापि शुद्धा पुनः,
स्त्री चैषा वनिता पितेव सततं विश्वस्तया जीवनम् ।
सङ्गं प्राप्य पितामहेन जनकं प्रासूत या कन्यका,
सा सर्वैरपि वन्दिवा क्षितितले सा नाम का नायिका ॥ १७ ॥

उत्तरम्—जलवृष्टिः । सा च शुद्धजलसमुदायभूतमेघादुद्भूय स्वजन्मना स्वोत्पादकं मेघन्नाशयति । तथापि स्वयं शुद्धा स्वच्छजलास्ति, पितुरिव समस्तस्य जगतः जीवनं च भवति । सूर्यकिरणैस्समुद्रोदके शोषिते सति तस्मान्मेघोत्पत्तिर्भवति । समुद्रो मेघपिता सा पूर्वोक्ता जलवृष्टिर्मेघस्य पित्रा स्वपितामहीभूतेन सागरेण सह नद्यादिद्वारा संगमं प्राप्य तेन तज्जलं वर्द्धयित्वा पुनर्मेघोत्पत्तये एव हेतुर्भवतीति जनकं प्रासूतेति पदार्थः ।

अपदो दूरगामी च साक्षरो न च पण्डितः ।
अमुखस्स्फुटवक्ता च यो जानाति स पण्डितः ॥ १८ ॥

उत्तरम्—लेखपत्रं पत्रिका वा ।

वने जाता वने त्यक्ता वने तिष्ठति निस्त्यशः ।
पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डितः ॥ १९ ॥

उत्तरम्—नौका एकान्तवासिनी । ताम्बूलं वा, वनं जलमित्यर्थः ।

गोपालो नैव गोपालस्त्रिशूली नैव शङ्करः ।
चक्रपाणिस्स नो विष्णुर्यो जानाति स पण्डितः ॥ २० ॥

उत्तरम्—महोक्षः ।

उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटम् ।
काकविष्ठासमुत्पन्नः पञ्चैतेऽतिः पवित्रकाः ॥ २१ ॥

उत्तरम्—दुग्धम्, गङ्गा, मधु, पट्टाम्बरम्, पिप्पलश्च ।



अनेकसुषिरं वाद्यं कान्तञ्च ऋषिसंज्ञितम् ।
चक्रिणा च सदाराध्यं यो जानाति स पण्डितः ॥ २२ ॥

उत्तरम्—विलम् वल्मीकम् वाद्यम् वकार आद्यो यस्य, कान्तम् ककारोऽन्ते यस्य, चक्रिणा सर्पेणेति । सर्पास्सदैव विलमाराध्यन्ति । वल्मीकम् ।

वने वसति को वीरो योऽस्थिमांसविवर्जितः ।
असिवत्कुरुते कार्यं कार्यं कृत्वा वनं गतः ॥ २३ ॥

उत्तरम्—कुलालदोरकः ।

रविजाशशिकुन्दाभा तापहारी जगत्प्रिया ।
वर्द्धते वनसङ्गेन न तापी यमुनापि न ॥ २४ ॥

उत्तर—तक्रम्, छाछ, मण्ठा । रविरिति महाराष्ट्रभाषायां मन्थनदण्डस्य नाम ।

दन्तैर्हीनश्शिलाभक्षी निर्जीवो बहुभाषकः ।
गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति ॥ २५ ॥

उत्तरम्—उपानत् ।

न वस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति ।
तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ॥ २६ ॥

उत्तरम्—नयने बोध्ये ।

यएवादिस्स एवान्तो मध्ये भवति मध्यमः ।
य एतन्नाभिजानीयात् तृणमात्रन्न वेत्ति सः ॥ २७ ॥

उत्तरम्—यवसम् ।

श्यामञ्च वर्तुलाकारं पुन्नाम चतुरक्षरम् ।
शकारादि मकारान्तं यो जानाति स पण्डितः ॥ २८ ॥

उत्तरम्—शालग्रामः गण्डकीनदीस्थः ।

अर्द्धचन्द्रवदाकारं स्त्रीनामाथच त्र्यक्षरम् ।
नकारादि रिकारान्तं योजानाति स पण्डितः ॥ २९ ॥

उत्तरम्—नेवरी ।

अष्टपादश्चतुष्कर्णो द्विमुखी द्विमुखस्तथा ।
राजद्वारे पठेद्वारो नच देवो न राक्षसः ॥ ३० ॥

उत्तरम्—वाद्यचतुर्वेदः, चौवड़ा इति लोकप्रसिद्धिः ।

तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥ ३१ ॥

अर्थः—कुम्भः । कूपसरोवरादौ जलेन भृत्वा शिरस्यारोपणसमये तरुण्या हस्ताभ्यामालिङ्ग्यते भर्त्तापि तरुण्या सोत्कण्ठमालिङ्ग्यते, कुम्भो नितम्बस्थाने गृह्यते भर्त्तापि नितम्बस्थाने गुह्यप्रदेशे तिष्ठेत् । कुम्भो गुरूणां वृद्धघटानामुपर्य्युपरि उपविश्य कूजति बड़बड़ायते । भर्त्तापि गुरूणां मातृपितृश्वश्रूश्वशुरजनानामग्रे स्त्रियं कामयते ।

अवलोक्य स्तनौ बद्ध्वा गुञ्जाफलविभूषितौ ।
निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बनी ॥ ३२ ॥

अर्थः—शबरस्त्री पुत्रजायायाः स्तनौ गुञ्जाफलालङ्कृतौ दृष्ट्वा कुतो निःश्वस्य रुरोद ? यतो मत्पुत्र एतामनुरक्तस्तथा क्षीणतां गतो यथा गजान्विनिहत्य तद्गण्डस्थलमुक्ताहारैः स्तनौ विभूषयितुन्नालम् । अतो निष्प्रयासलभ्यैः गुञ्जाफलैः विभूषयति । क्षीणे च सति पुत्रे तदर्जितधननिर्वाहवृत्तिकस्य सर्वस्यापि कुटुम्बस्य जीवितसन्देहः । अतो व्याधकुटुम्बिनी दुःखन्निःश्वस्य रोदितुं लग्ना ।

आपाण्डुपीनकठिनं वर्त्तुलं सुमनोहरम् ।
करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ ३३ ॥

उत्तरम्—पक्वबिल्वफलम्, कुचयुगलञ्च ।

एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः ।
क्षीयते वर्द्धते चैव न समुद्रो न चन्द्रमाः ॥ ३४ ॥

उत्तरम्—सूचिका । सूई इति लोकप्रसिद्धिः ।

छत्रधारी न राजासौ जटाधारी नचेश्वरः ।
सृष्टिकर्त्ता न स ब्रह्मा छिद्रकर्त्ता न तस्करः ॥ ३५ ॥



उत्तरम्—पुन्ध्वजः ।

अस्थि नास्ति शिरोनास्ति बाहुरस्ति निरङ्गुलिः ।
नास्ति पादद्वयं गाढमङ्गमालिङ्गति स्वयम ॥ ३६ ॥

उत्तरम्—विषयदण्डः ।

अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ ।
सीताहरणसामर्थ्यो न रामो नच रावणः ॥ ३७ ॥

उत्तरम्—कञ्चुकः कञ्चुकी वा । सीताहरणेत्यत्र शाताहरणेति शैत्यहारकत्वं प्रसिद्धम् ।

नरनारीसमुत्पन्ना सा स्त्रीदेहविवर्जिता ।
अमुखी कुरुते शब्दं जातमात्रा विनश्यति ॥ ३८ ॥

उत्तरम्—छोटिका लोकप्रसिद्धा ।

अपह्नुत्युदाहरणानि ।

काले पयोधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि बाले नहि नहि सखि पिच्छिलः पन्थाः ॥ १ ॥

अर्थः—अपतितया पतिम्बिनेत्यर्थः । पक्षे पतनाभावेन पिच्छिलः पङ्किलः ।

प्रहरति न पञ्चबाणः केवलमबले निमेषोऽपि ।
वर्षति परं न देवः क्षणदायां विप्रयोगन्ते ॥ २ ॥

तन्वी चारुपयोधरा सुबदना श्यामा मनोहारिणी,
नीता निष्करुणेन केन चिदहो देशान्तरादागता ।
उत्सङ्गोचितयातया रहितया किञ्जीवनं प्रेक्षसे,
भिक्षो ते दयितास्ति किन्नहि नहि प्राणप्रिया तुम्बिका ॥३॥

अर्थः—समीपे स्थातुं योग्यया, पक्षे अङ्कमारोढुं योग्यया ।

या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा,
गौरीस्पर्शसुखावहा गुणवती नित्यं मनोहारिणी ।

सा केनापि हृता तया विरहितो गन्तुन्नशक्योऽस्म्यहं,
रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥ ४ ॥

अर्थः—पाणिग्रहजनिताविवाहः । पक्षे पाणौ धारणम् । सुवंशोद्भवा कुलजा। पक्षे वेणुः ।

नाथ विलोकय मेघं नहि नहि पापं तवातिपुण्यायाः ।
नहि कथयामि पयोधरमपसारय कञ्चुकीमुरसः ॥५॥

अर्थः—मेघम् , अम्बुदम् , पक्षे मे कोऽर्थो मम अघम् पापम् । पक्षे स्तनम् मे उर इति च्छेदः ।

वैयाकरणानाम् प्रशंसा

वैयाकरणकिरातादपशब्दमृगाᳵक यान्ति सन्त्रस्ताः ।
ज्योतिर्नटविटगायकभिषगाननगह्वराणि यदि न स्युः ॥ १ ॥
सूत्रं पाणिनिबद्धं कलयन्पुरुषः समुद्वहति सुदृशम् ।
वर्णादीनां धर्मान् बुद्ध्वा विधिवत्प्रयुङ्क्तेऽसौ ॥ २ ॥

अर्थः—व्याकरणं सूत्रम् । पक्षे कङ्कणम् । पाणिनिना बद्धम् रचितम् । पक्षे पाणौ हस्ते निबद्धं विवाहकाले सूत्रनिर्मितकङ्कणेवधूवरयोर्हस्तयोर्बध्नन्तीतिलोकः । सूत्रपक्षे अर्थज्ञानपूर्वकं विचारयन् कङ्कणपक्षे धारयन् सम्यग्धारयति । पक्षे सम्यगुद्वहति शोभनां दृष्टिम् शुद्धाशुद्धविवेकशक्तिम् , पक्षे शोभना दृग् यस्या एतादृशीं स्त्रियम् । अकारप्रभृतिवर्णादीनाम् पक्षे ब्राह्मणादिवर्णादीनाम् बुध्वा ज्ञात्वेत्यर्थः । यथाशास्त्रं प्रयोगं करोति, पक्षे योजयति ।

नैयायिकानाम्प्रशंसा ।

मोहं रुणद्धि विमलीकुरुते च बुद्धिं,
सूते च संस्कृतपदव्यवहारशक्तिम् ।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति,
तर्कश्रमो न तनुते किमिहोपकारम् ॥ १ ॥

नैयायिकानां निन्दा ।

परामृशन्तो लिङ्गानि व्यभिचारविचारकाः ।
तार्किका यदि विद्वांसो विदैᳵकिमपराध्यते ॥ १ ॥



## अन्तरालापोदाहरणानि ।

कस्तूरी जायते कस्मात्को हन्ति करिणां कुलम् ।
किंकुर्यात्कातरो युद्धे मृगात्सिंहᳶपलायनम् ॥ १ ॥

उत्तरम्—कस्तूरी मृगाज्जायते । करिणां कुलं सिंहो हन्ति । कातरो युद्धे पलायनं कुर्यान्नान्यत् ।

युधिष्ठिरᳵकस्य पुत्रो गङ्गा वहति कीदृशी ।
हंसस्य शोभा का वास्ति धर्मस्य त्वरितं गतिः ॥ २ ॥

उत्तरम्—धर्मस्य पुत्रो युधिष्ठिरः । गङ्गा त्वरिता वहति । हंसस्य शोभा गतिरेव ।

भोजनान्ते च किम्पेयं जयन्तᳵकस्य वा सुतः ।
कथंविष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् ॥ ३ ॥

उत्तरम्—भोजनान्ते तक्रम्पेयम् , जयन्तश्शक्रस्येन्द्रस्य सुतः, विष्णुपदं दुर्लभम् ।

कं संजघान कृष्णः का शीतलवाहिनी गङ्गा ।
केदारपोषणरताः कं बलवन्तन्न बाधते शीतम् ॥ ४ ॥

उत्तरम्—कृष्णः कं संजघानेति प्रश्ने कंसमित्युत्तरम् । शीतलवाहिनी गङ्गा केति प्रश्ने काशीतलवाहिनी । गुणे शुक्लादयᳶपुंसीति कोशात् शीतशब्दो नित्यपुंल्लिङ्ग इति कथं क्लीबत्वमितिविचार्य्यम् । दारपोषणरताᳵके इति प्रश्ने केदारपोषणरता इत्युत्तरम् । शीतम्बलवन्तं कन्न बाधते इति प्रश्ने कम्बलवन्तमित्युत्तरम् ।

कः कौ के कं कौ कान् हसतिच हसतो हसन्ति हरिणाक्ष्याः ।
अधरः पल्लवमङ्घ्रीहंसौ कुन्दस्य कोरकान्दन्ता ॥ ५ ॥

उत्तरम्—हरिणाक्ष्याः कः कं हसति अधरः, पल्लवम् कौ कौ हसतः, अङ्घ्रीहंसौ, के कान् हसन्ति दन्ताः कुन्दस्य कोरकान् ।

का शम्भुकान्ता किमु चन्द्रकांतं कांतामुखं किं कुरुते भुजङ्गः ।
कः श्रीपतिः का विषमा समस्या गौरीमुखञ्चुम्बति वासुदेवः ॥ ६ ॥

उत्तरम्—गौरी मुखम् चुम्बति वासुदेवः । गौरीमुखम् चुम्बति वासुदेव (भुजङ्गो जारः)

के भूषयंति रत्नमण्डलानि कीदृग्गुणा चंद्रमसः कुतः श्रीः ।
किमाह सीतादशकण्ठनीता हा राम हा देवर तातमातः ॥ ७ ॥

अर्थः—हाराः महादेव रता तमातः रात्रितः, हा राम, हा देवर, हा तात, हा मातः ? इति ।

## बहिरालापोदाहरणानि ।

पूजायां किं पदं प्रोक्तमस्तनं को बिभर्त्युरः ।
क आयुधतयाख्यातः प्रलम्बासुरविद्विषः ॥ १ ॥

समुत्तरम्—सु नो सीरः हः पूजायाम् (सूत्रम्), नो पुरुषः, सीरो हलम् ।

कोदुराढ्यस्य मोहाय का प्रिया मुरविद्विषः ।
पदं प्रश्नवितर्के किं कोदन्तच्छदभूषणम् ॥ २ ॥

समुत्तरम्—रामानुरागः = रा धनम्, मा लक्ष्मीः, नु इति वितर्के, राग आरक्तत्वम् ।

पक्षिश्रेष्ठ सखीवभ्रू सुरा वाच्याः कथम्वद ।
ज्येष्ठे मासि गताश्शोषं कीदृश्योऽल्पजलाशुवः ॥ ३ ॥

समुत्तरम्—वि वराली नकुलीरा := विः पक्षी, वरं श्रेष्ठम्, आली सखी नकुली नकुलस्यस्त्री, इरा मदिरा, विवरेषु = छिद्रेषु आलीना अविषाः कुलीराः = जलजीवविशेषास्सुताः ।

आनन्दयति कोऽत्यर्थं सज्जनानेव भूतले ।
प्रबोधयति पद्मानि तमांसि च निहन्ति कः ॥ ४ ॥

समुत्तरम्—मित्रोदयः । मित्राणां सखीनामुदयो वृद्धिः । मित्रस्य सूर्यस्य उदयः उद्गमनम् ।

को नयति जगदशेषं क्षयमथ विभराग्वभूव कं विष्णुः ।
नीच〰कुत्र सगर्वः पाणिनिसूत्रञ्च कीदृक्तम् ॥ ५ ॥



समुत्तरम्—"यमो गन्धने" इति पाणिनिसूत्रम् । कृतान्तः "कृतान्तो यमसिद्धान्ताविति" कोशः। अगम्, गोवर्द्धनम् न गच्छतीत्यगम्, धने सति नीचस्सगर्वः।

किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणीभवति ।
नीच〰केन सगर्वः सूत्रं चन्द्रस्य कीदृक्तम् ॥ ६ ॥

उत्तरम्-विशेषणमेकार्थेन । एका शून्यानां संख्यापूरकमेकमेव भवति, एकादौ अङ्कोलिख्यते तदा विन्दूनां साफल्यम् स्यादन्यथा शून्यमेव। अर्थेन द्रव्येण विशेषणमेकार्थेन इदञ्चान्द्रव्याकरणसूत्रम् ।

सुकपरिविन्दः शब्दः सुब्रह्मण्यस्य वाचक〰केन ।
स्तनभरनमिता नारी केनोपायेन रञ्जयेत् कान्तम् ॥ ७ ॥

उत्तरम्—उपरि विहरणेन । आद्ये सुकपरिविन्दशब्दे उ. प. रि. वि. इत्येतेषाम्वर्णानां हरणेन निष्कासनेन स्कन्द इति शब्दः सुब्रह्मण्यस्य षडाननस्य वाचको भवति । द्वितीये उपरि विहरणेनेत्यस्य विपरीतरतेनेत्यर्थः ।

उरस्स्थलं कोऽत्र विनापयोधरं बिभर्ति सम्बोधय मारुताशनम् ।
वदन्ति कं पत्तनसम्भवं जनाः फलञ्च किं नोपवधूकुचोपमम् ॥ ८ ॥

उत्तरम्—नागरं गम्—ना पुमान्, हे नाग = हे सर्प, नागरः नगरेभवस्तम् नागरङ्गम् = नारङ्गीफलम् ।

क〰 पूज्यस्सुजनत्वमेति कतमः क्व स्थीयते पण्डितैः,
श्रीमत्या शिवया च केन भुवने युद्धं कृतं दारुणम् ।
किं वाञ्छन्ति सदा जना युवजना ध्यायन्ति किम्मानसे,
मत्प्रश्नोत्तरमध्यमाक्षरपदं भूयात्तवाशीर्वचः ॥ ९ ॥

उत्तरम्—भूदेवः स्ववशः संसदि दुर्गेण (दैत्यः) वैभवं युवतिम् मध्यमाक्षरोद्धरेण देव सर्गोभव इति । छत्रकोटिस्थलस्याः इति तात्पर्यम् ।

वसन्तमासाद्य वनेषु राजते विकाशि किंवल्लभ पुष्पमुच्यताम् ।
विहङ्गमं कं च परिस्फुटाक्षरं वदन्ति किं पङ्कजसम्भवं विदुः ॥ १० ॥

उत्तरम्—किंशुकम् पलाशम्, शुकं कीरम्, कम्बखाणम् ।

कामरिरहितामिच्छति भूप×कामुद्धरयति शूकररूपः ।
केनाऽकारि हि मन्मथजननं केन विभाति च तरुणीवदनम् ॥ ११ ॥

उत्तरम्—कुंकुमेन । कुप[१]थ्वीम्; कुम्भैगम्[२] ( गुँग ) कुम्भेन "अकारो वासुदेवस्यादि"ति कोशः तृतीयान्तम् ।

इति जौनपुरमण्डलान्तर्गत-बदलापुर-उदयपुर गेलहवाभिजन-सरयूपारीण-
गर्गकुलोत्पन्न-प्रायश्शतग्रन्थकार, सँस्कृताशुकविचक्रवर्ति-
विश्वविख्यात-शास्त्रार्थि-पण्डितराज शुक्ल-
श्रीवेणीमाधवशास्त्रिणा सङ्कलिता
कूटशास्त्रार्थकला समाप्ता ।

* शिवम् *

प्राप्तिस्थानम्—
चौखम्बा-संस्कृत-पुस्तकालय,
विद्याविलास प्रेस,
बनारस सिटी ।

